मध्यमपरीक्षाप्रथमखण्डोपयोगी—

# सिद्धान्तकौमुदी-परिशिष्टसङ्ग्रहः

उदाहरणार्थकौमुदी-सूत्रपदच्छेदकौमुदी-गणपाठा-न्वयार्थ-गणरत्नकौमुदी-सङ्क्षिप्तसरल-फक्किकाकौमुदीविराजितः।



[ ... नियमावली के अनुसार मध्यमा परीक्षा प्रथमखण्ड में पाठ्य उत्तम सङ्ग्रह, कारकान्तभाग ]

प्रकाशकः—

पं० श्रीसीतारामशास्त्री।

[ मैनेजर—श्रीराजस्थान-संस्कृत-कालेज, मीरघाट, काशी ]




नई नियमावली के अनुसार मध्यमा प्रथम खण्ड में सिद्धान्त कौमुदी के सूत्रोंका पदच्छेद, गणपाठ आदि विषय भी पाठ्य रूप से नियत हुए हैं।

उनका यह संग्रह–'परिशिष्ट संग्रह' नाम से प्रकट किया जारहा है। इसमें परीक्षोपयोगी उक्त सभी विषय आगए हैं।

सूत्रक्रम के ज्ञान के लिए तो अष्टाध्यायी का अभ्यास करना चाहिए।

मध्यकौमुदी का कारकप्रकरण सिद्धान्त कौमुदी के कारक प्रकरण में ही अन्तर्भूत है। अतः उसको पृथक् देना व्यर्थ है। बाकी विषय इस संग्रह में पूर्ण रूप से आही गए हैं।

यह संग्रह अपने विषय का बिल्कुल ही नवीन ग्रन्थ है। परीक्षार्थी छात्रों को इससे लाभ उठाना चाहिए।

श्रीराजस्थान-संस्कृत-कालेज-<br>ग्रन्थमाला, मीरघाट,<br>काशी।<br>१–११–३९

निवेदक—<br>श्रीगुरुप्रसादशास्त्री

सूत्रपदच्छेदकौमुद्यां विशेषः। पुंयोगादाख्यायाम्। पुमिति लुप्तषष्ठीकं पृथक्पदम्। योगात्–पञ्चम्यन्तम्। आख्यायां सप्तम्यन्तम्। इति पदच्छेदस्तत्त्वबोधिन्याम्।

# अथ सिद्धान्तकौमुद्याः परिशिष्टसंग्रहे
## प्रथमखण्डोपयोगी
# गणपाठः



सर्वादीनि सर्वनामानि १।१।२७॥ सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम्** । **स्वमज्ञातिधनाख्यायाम्**। **अन्तरं बहिर्योगोपसंव्यानयोः**। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ इति सर्वादिः ॥

स्वरादिनिपातमव्ययम् १।१।३७॥ स्वर् अन्तर् प्रातर्। अन्तोदात्ताः। पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् [ अन्तिकात् ] पृथक्। आद्युदात्ताः। ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् [ शश्वत् ] जोषम् तूष्णीम् बहिस् [ अधस् ] अवस् समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ [ हे है ] इद्धा अद्धा सामि। अन्तोदात्ताः। वत्। ब्राह्मवणत्। क्षत्रियवत्। सना सनत् सनात् उपधा तिरस्। आद्युदात्ताः। अन्तरा। अन्तोदात्तः। अन्तरेण [ मक् ] ज्योक् [ योक् नक् ] कम् शम् सना सहसा [ श्रद्धा ] अलम् स्वधा वषट् विना नाना स्वस्ति अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा दिष्ट्या वृथा मिथ्या। **क्त्वातोसुन्कसुनः**। **कृन्मकारसन्ध्यक्षरान्तोऽव्ययीभावश्च**। पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकम् सार्धम् [ सत्रम् समम् ] नमस् हिरुक्। **तसिलादयस्तद्धिता एधाच्पर्यन्ताः**। **शस्तसी कृत्वसुच् सुच् आस्थालौ**। **च्व्यर्थाश्च**। [ अथ ] अम् आम् प्रताम् प्रतान् प्रशान्। **आकृतिगणोऽयम्**। तेनान्येऽपि। तथाहि—माङ् श्रम् कामम् [ प्रकामम् ] भूयस् परम् साक्षात् साचि ( सावि ) सत्यम् मङ्क्षु संवत् अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम् सन्ततम् उषा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अ मिथु ( अमिथु ) विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम्

आनुषक् अनुषक् अनुषट् अम्नस् ( अम्भस् ) अम्नर् ( अम्भर् ) स्थाने वरम् दुष्ठु बलात् शु अर्वाक् शुदि वदि इत्यादि । **तसिलादयः प्राक्पाशपः शस्प्रभृतयः प्राक्समासान्तेभ्यः। मान्तः कृत्वोर्थः। तसिवती। नानाञाविति ॥** इति स्वरादिः ॥

**चादयोऽसत्त्वे १।४।५७॥** च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् सूपत् कूपत् कुवित् नेत् ,चेत् चण् कच्चित् यत्र तत्र नह हन्त माकिम् माकीम् माकिर् नकिम् नकीम् नकिर् आकीम् माङ् नञ् तावत् यावत् त्वा त्वै द्वै न्वै रै [ रे ] श्रौषट् वौषट् स्वाहा स्वधा ओम् तथा तथाहि खलु किल अथ सुष्ठु स्म अ इ उ ऋ लृ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा ( वध्वा ) धिक् हाहा हेहै ( हहे ) पाट् प्याट् आहो उताहो हो अहो नो ( नौ ) अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात् वन वत [ सम् वशम् शिकम् दिकम् ] सनुकं छंवट् ( छम्बट् ) शङ्के शुकम् खम् सनात् सनुतर् नहिकम् सत्यम् ऋतम् अद्धा इद्धा नोचेत् नचेत् नहि जातु कथम् कुतः कुत्र अव अनु हा हे [ है ] आहोस्वित् शम् कम् खम् दिष्ट्या पशु नट् सह [ आनुषट् ] आनुषक् अङ्ग फट् ताजक् भाजक् अये अरे वाट् ( चाटु ) कुम् खुम् घुम् अम् ईम् सीम् सिम् सि वै । **उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः ॥**, **आकृतिगणोऽयम् ॥** इति चादयः ॥

**प्रादयः १।४।५८॥** प्र परा अप सम् अनु अव् निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप ॥ इति प्रादयः ॥

---

**अजाद्यतष्टाप् ४।१।४॥** अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापिहाणा ( पूर्वापहाणा ) अपरापहाणा। **सम्भस्त्राजिनशणपिण्डेभ्यः फलात्। सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्। शूद्रा चामहत्पूर्वा जातिः ।** क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा। **मध्यमा पुंयोगेऽपि । मूलान्नञः ।** दंष्ट्रा ॥ एतेऽजादयः ॥

**न षट्स्वस्रादिभ्यः ४।१।१०॥** स्वसृ दुहितृ ननान्दृ यातृ मातृ तिसृ चतसृ इति स्वस्रादिः ॥

नित्यं सपत्न्यादिषु ४।१।३५ समान एक वीर पिण्ड (श्व) ( शिरी ) भ्रातृ भद्र पुत्र । **दासाच्छन्दसि** ॥ इति समानादिः ॥

षिद्गौरादिभ्यश्च ४।१।४१॥ गौर मत्स्य मनुष्य शृङ्ग (पिङ्गल) हय गवय मुकय ऋष्य पुट [ तूण ] द्रुण द्रोण हरिण कोकण ( काकण ) पटर उकण [ आमल ] आमलक कुवल बिम्ब बदर फर्करक ( कर्करक ) तर्कार शर्कार पुष्कर शिखण्ड सलद शष्कण्ड सनन्द सुषम सुषव अलिन्द गडुल षाण्डश आढक आनन्द आश्वत्थ सृपाट आखक ( आपच्चिक ) शष्कुल सूर्य ( सूर्म ) शूर्प सूप यूष ( पूष ) यूथ सूप मेथ वल्लक धातक सल्लक माल्लक मालत साल्वक वेतस वृक्ष ( वृस ) अतस [ उभय ] भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन् अनुडुही अनड्वाही । एषणः करणे। देह देहल काकादन गवादन तेजन रजन लवण औद्गाहमानि आद्गाहमानि गौतम (गोतम) [ पारक ] अयस्थूण (अयःस्थूण) भौरिकि भौलिकि भौलिङ्गि यान मेघ आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट टोट नोट मूलाट शातन [पोतन] पातन पाठन (पानठ) आस्तरण अधिकरण अधिकार अग्रहायणी ( आग्रहायणी ) प्रत्यवरोहिणी [ सेचन ] **सुमङ्गलात्सञ्ज्ञायाम्** । अण्डर सुन्दर मण्डल मन्थर मङ्गल पट पिण्ड [ षण्ड ] उर्द गुर्द शम सूद औड (आर्द्र) ह्रद ( हृद ) पाण्ड [ भाण्डल ] भाण्ड [ लोहाण्ड ] कदर कन्दर कदल तरुण तलुन कल्माष बृहत् महत् [ सोम ] सौधर्म । **रोहिणी नक्षत्रे** । **रेवती नक्षत्रे** । विकल निष्कल पुष्कल । **कटाच्छ्रोणिवचने** । **पिप्पल्यादयश्च** । पिप्पली हरितकी ( हरीतकी ) कोशातकी शमी वरी शरी पृथिवी क्रोष्टु मातामह पितामह ॥ इति गौरादिः ॥

बह्वादिभ्यश्च ४।१।४५॥ बहु पद्धति अञ्चति अङ्कति अंहति शकटि (शकति)। **शक्तिः शस्त्रे** । शारि वारि राति राधि [ शाधि ] अहि कपि यष्टि मुनि । **इतः प्राण्यङ्गात्** । **कृदिकारादक्तिनः** । **सर्वतोऽक्तिन्नर्थादित्येके** । चण्ड अराल कृपण कमल विकट विशाल विशङ्कट भरुज ध्वज **चन्द्रभागान्नद्याम्** (चन्द्रभागा नद्याम्) कल्याण उदार पुराण अहन् क्रोड नख खुर शिखा बाल शफ गुद ॥ आकृतिगणोऽयम् । तेन भग गल राग इत्यादि ॥ इति बह्वादयः ॥

शार्ङ्गरवाद्यञो ङीन् ४।१।७३॥ शार्ङ्गरव कापटव गौग्गुलव ब्राह्मण बैद गौतम कामण्डलेय ब्राह्मणकृतेय [ आनिचेय ] आनिधेय आशोकेय वात्स्यायन मौञ्जायन

कैकस काप्य ( काव्य ) शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड । भोगवद्गौरिमतोः सञ्ज्ञायां घादिषु नित्यं ह्रस्वार्थम् । नृनयोर्वृद्धिश्च ॥ इति शार्ङ्गरवादिः ॥

---

⁂ शकन्ध्वादिषु पररूपं वाच्यम् ⁂ ६।१।९४॥ शकन्धुः कर्कन्धुः कुलटा । सीमन्तः केशवेशे । हलीषा मनीषा लाङ्गलीषा पतञ्जलिः । सारङ्गः पशुपक्षिणोः ॥ इति शकन्ध्वादिः ॥

⁂ क्षिपकादीनां चोपसङ्ख्यानम् ⁂ ७।३।४५॥ क्षिपका ध्रुवका चरका सेवका करका चटका अवका लहका अलका कन्यका ध्रुवका एडका ॥

इति क्षिपकादिराकृतिगणः ॥

---

* अहरादीनां पत्यादिषु वा रेफः ॥ ८।२।७० ॥ अहर् गिर् धुर् ॥

इत्यहरादिः ॥

पति गण पुत्र ॥ इति पत्यादिः ॥

कस्कादिषु च ८।३।४८॥ कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्कीः साद्यस्कः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बहिष्पलम् (बर्हिष्पलम्) यजुष्पात्रम् अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः

इति कस्कादिराकृतिगणः ॥

इति मध्यमपरीक्षाप्रथमखण्डोपयोगी

## * गणपाठः *

---

# अथ कौमुद्याः

# परिशिष्टसंग्रहे पाणिनिसूत्रपदच्छेदकौमुदी

**हलन्त्यम्।** हल्-प्रथमान्तम्। अन्त्यं-प्रथमान्तम्।

**आदिरन्त्येन सहेता।** आदिः-प्रथमान्तम्। अन्त्येन-तृतीयान्तम्। सह-अव्ययपदम्। इता-तृतीयान्तम्।

**हलन्त्यम्।** प्रथमान्तम्।

**उपदेशेऽजनुनासिक इत्।** उपदेशे-सप्तम्यन्तम्। अच्-प्रथमान्तम्। अनुनासिकः-प्रथमान्तम्। इत्-प्रथमान्तम्।

**ऊकालोऽज्झ्रस्वदीर्घप्लुतः।** ऊकालः-प्रथमान्तम्। अच्-प्रथमान्तम्। ह्रस्वदीर्घप्लुतः-प्रथमान्तम्।

**उच्चैरुदात्तः।** उच्चैः-अव्ययपदम्, उदात्तः प्रथमान्तम्।

**नीचैरनुदात्तः।** नीचैः-अव्ययपदम्। अनुदात्तः-प्रथमान्तम्।

**समाहारः स्वरितः।** समाहारः-प्रथमान्तम्। स्वरितः-प्रथमान्तम्।

**तस्यादित उदात्तमर्धह्रस्वम्।** तस्य-षष्ठ्यन्तम्। आदितः-अव्ययपदम्। उदात्तम्-प्रथमान्तम्। अर्धह्रस्वम्-प्रथमान्तम्।

**मुखनासिकावचनोऽनुनासिकः।** मुखनासिकावचनः-प्रथमान्तम्। अनुनासिकः-प्रथमान्तम्।

**तुल्यास्यप्रयत्नं सवर्णम्।** तुल्यास्यप्रयत्नम्-प्रथमान्तम्। सवर्णम्-प्रथमान्तम्।

**अ अ।** 'अ' इति लुप्तषष्ठ्यन्तम्। 'अ' इति लुप्तप्रथमान्तम्।

**पूर्वत्राऽसिद्धम्।** पूर्वत्र-अव्ययपदम्। असिद्धम्-प्रथमान्तम्।

**नाऽऽज्झलौ।** न-अव्ययपदम्। आज्झलौ-प्रथमान्तम्।

**अणुदित्सवर्णस्य चाऽप्रत्ययः।** अण्-प्रथमान्तम्। उदित्-प्रथमान्तम्। सवर्णस्य-षष्ठ्यन्तम्-च अव्ययपदम्। अप्रत्ययः-प्रथमान्तम्।

**तपरस्तत्कालस्य।** तपरः-प्रथमान्तम्। तत्कालस्य-षष्ठ्यन्तम्।

**वृद्धिरादैच्।** वृद्धिः-प्रथमान्तम्। आत्-प्रथमान्तम्। ऐच्-प्रथमान्तम्।

**अदेङ् गुणः।** अदेङ्-प्रथमान्तं। गुणः-प्रथमान्तम्।

**भूवादयो धातवः।** भूवादयः-प्रथमान्तम्। धातवः-प्रथमान्तम्।

**प्राग्रीश्वरान्निपाताः।** प्राक्-प्रथमान्तम्। ईश्वरात्-पञ्चम्यन्तम्। निपाताः-प्रथमान्तम्।

**चादयोऽसत्त्वे।** चादयः-प्रथमान्तम्। असत्त्वे-सप्तम्यन्तम्।

**प्रादयः।** प्रादयः-प्रथमान्तम्।

**उपसर्गाः क्रियायोगे।** उपसर्गाः-प्रथमान्तम्। क्रियायोगे-सप्तम्यन्तम्।

**गतिश्च।** गतिः प्रथमान्तम्। च अव्ययपदम्।

**न वेति विभाषा**। न–अव्ययपदम्। वा–अव्ययपदम्। इति–अव्ययपदम्। विभाषा–प्रथमान्तम्।

**स्वं रूपं शब्दस्य**। स्वम्–प्रथमान्तम्। रूपम्–प्रथमान्तम्। शब्दस्य–पष्ठयन्तम्। अशब्दसञ्ज्ञा–प्रथमान्तम्।

**येन विधिः**। येन–तृतीयान्तम्। विधिः प्रथमान्तम्। तदन्तस्य–पष्ठयन्तम्।

**विरामोऽवसानम्**। विरामः–प्रथमान्तम्। अवसानम्–प्रथमान्तम्।

**परः सन्निकर्षः**। परः–प्रथमान्तम्। सन्निकर्षः–प्रथमान्तम्। संहिता–प्रथमान्तम्।

**सुप्तिङन्तं पदम्**। सुप्तिङन्तम्–प्रथमान्तम्। पदम्–प्रथमान्तम्।

**हलोऽनन्तराः संयोगः**। हलः–पष्ठयन्तम्। अनन्तराः–प्रथमान्तम्। संयोगः–प्रथमान्तम्।

**ह्रस्वं लघु**। ह्रस्वम्–प्रथमान्तम्। लघु–प्रथमान्तम्।

**संयोगे गुरु**। संयोगे–सप्तम्यन्तम्। गुरु–प्रथमान्तम्।

**दीर्घं च**। दीर्घम्–प्रथमान्तम्। च–अव्ययपदम्। इति पदच्छेदकौमुद्यां।

**सञ्ज्ञाप्रकरणम्**।

**इको गुणवृद्धी**। इकः–पष्ठयन्ताऽनुकरणं प्रथमान्तम्। गुणवृद्धो–प्रथमान्तम्।

**अचश्च**। अचः–पष्ठयन्तानुकरणं प्रथमान्तम्। च–अव्ययपदम्।

**आद्यन्तौ टकितौ**। आद्यन्तौ–प्रथमा तम्। टकितौ–प्रथमान्तम्।

**मिदचोऽन्त्यात्परः**। मित्–प्रथमान्तम्। अचः–पष्ठयन्तम्। अन्त्यात्–पञ्चम्यन्तम्। परः–प्रथमान्तम्।

**षष्ठी स्थानेयोगा**। पष्ठी–प्रथमान्तम्। स्थानेयोगा–प्रथमान्तम्।

**स्थानेऽन्तरतमः**। स्थाने–सप्तम्यन्तम्। अन्तरतमः–प्रथमान्तम्।

**तस्मिन्निति निर्दिष्टे पूर्वस्य**। तस्मिन्निति सप्तम्यन्ताऽनुकरणं प्रथमान्तम्। इति अव्ययपदम्। निर्दिष्टे–सप्तम्यन्तम्। पूर्वस्य–पष्ठयन्तम्।

**तस्मादित्युत्तरस्य**। तस्मात्–इति पञ्चम्यन्तानुकरणं प्रथमान्तम्। इति–अव्ययपदम्। उत्तरस्य–पष्ठयन्तम्।

**अलोऽन्त्यस्य**। अलः–पष्ठयन्तम्। अन्त्यस्य–पष्ठयन्तम्।

**ङिच्च**। ङित्–प्रथमान्तम्। च–अव्ययपदम्।

**आदेः परस्य**। आदेः पष्ठयन्तम्, परस्य–पष्ठयन्तम्।

**अनेकाल्शित्सर्वस्य**। अनेकाल्–प्रथमान्तम्। शित्–प्रथमान्तम्। सर्वस्य–पष्ठयन्तम्।

**स्वरितेनाऽधिकारः**। स्वरितेन–तृतीयान्तम्। अधिकारः–प्रथमान्तम्।

**इति पदच्छेदकौमुद्यां परिभाष.प्रकरणम्**।

**इको यणचि**। इकः–पष्ठयन्तम्। यण्–प्रथमान्तम्। अचि–सप्तम्यन्तम्।

**अनचि च**। अनचि–सप्तम्यन्तम्। च–अव्ययपदम्।

**स्थानिवदादेशः**। स्थानिवत्–अव्ययपदम्। आदेशः प्रथमान्तम् अनल्विधौ सप्तम्यन्तम्।

**अचः परस्मिन्**। अचः–पष्ठयन्तम्। परस्मिन्–सप्तम्यन्तम्। पूर्वविधौ–सप्तम्यन्तम्।

**न पदान्त**। न–अव्ययपदम्। पदान्त-द्विर्वचन···विधिषु–सप्तम्यन्तम्।

**झलां जश्**। झलां–पष्ठयन्तम्। जश्–प्रथमान्तम्। झशि–सप्तम्यन्तम्।

**अदर्शनं लोपः।** अदर्शनं–प्रथमान्तम्। लोपः–प्रथमान्तम्।

**संयोगान्तस्य लोपः।** संयोगान्तस्य–पष्ठ्यन्तम्। लोपः–प्रथमान्तम्।

**नादिन्याक्रोशे।** न–अव्ययपदम्। आदिनि–सप्तम्यन्तम्। आक्रोशे–सप्तम्यन्तम्। पुत्रस्य–पष्ठ्यन्तम्।

**त्रिप्रभृतिषु।** त्रिप्रभृतिषु–सप्तम्यन्तम्। शाकटायनस्य–पष्ठ्यन्तम्।

**सर्वत्र शाकल्यस्य।** सर्वत्र–अव्ययपदम्। शाकल्यस्य–पष्ठ्यन्तम्।

**दीर्घादाचार्याणाम्।** दीर्घात्–पञ्चम्यन्तम्। आचार्याणां–पष्ठ्यन्तम्।

**अचो रहाभ्यां।** अचः–पञ्चम्यन्तम्। रहाभ्याम्–पञ्चम्यन्तम्। द्वे–प्रथमान्तम्।

**हलो यमां।** हलः–पञ्चम्यन्तं। यमां–पष्ठ्यन्तम्। यमि–सप्तम्यन्तम्। लोपः–प्रथमान्तम्।

**एचोऽयवायावः।** एचः–पष्ठ्यन्तम्। अयवायावः–प्रथमान्तम्।

**तस्य लोपः।** तस्य–पष्ठ्यन्तम्। लोपः–प्रथमान्तम्।

**वान्तो यि प्रत्यये।** वान्तः–प्रथमान्तम्। यि–सप्तम्यन्तम्। प्रत्यये–सप्तम्यन्तम्।

**धातोस्तन्निमित्तस्यैव।** धातोः–पष्ठ्यन्तम्। तन्निमित्तस्य–पष्ठ्यन्तम्। एव–अव्ययपदम्।

**क्षय्यजय्यौ शक्यार्थे।** क्षय्यजय्यौ–प्रथमान्तं। शक्यार्थे–षष्ठ्यन्तम्।

**क्रय्यस्तदर्थे।** क्रय्यः–प्रथमान्तम्। तदर्थे–सप्तम्यन्तम्।

**लोपः शाकल्यस्य।** लोपः–प्रथमान्तम्। शाकल्यस्य–पष्ठ्यन्तम्।

**एकः पूर्वपरयोः।** एकः–प्रथमान्तम्। पूर्वपरयोः पष्ठ्यन्तम्।

**आद्गुणः।** आत्–पञ्चम्यन्तम्। गुणः–प्रथमान्तम्।

**उरण् रपरः।** उः–पष्ठ्यन्तम्। अण्–प्रथमान्तम्। रपरः–प्रथमान्तम्।

**झरो झरि।** झरः–पष्ठ्यन्तम्। झरि–सप्तम्यन्तम्। सवर्णे–सप्तम्यन्तम्।

**वृद्धिरेचि।** वृद्धिः–प्रथमान्तम्। एचि–सप्तम्यन्तम्।

**एत्येधत्यूठ्सु।** सप्तम्यन्तम्।

**उपसर्गादृति धातौ।** उपसर्गात्–पञ्चम्यन्तम्। ऋति–सप्तम्यन्तम्। धातौ-सप्तम्यन्तम्।

**अन्तादिवच्च।** अन्तादिवत्–अव्ययपदम्। च–अव्ययपदम्।

**खरवसानयोर्विसर्जनीयः।** खरवसानयोः–सप्तम्यन्तम्। विसर्जनीयः–प्रथमान्तम्।

**वा सुप्यापिशलेः।** वा–अव्ययपदम्। सुपि–सप्तम्यन्तम्। आपिशलेः–पष्ठ्यन्तम्।

**एङि पररूपम्।** एङि–सप्तम्यन्तम्। पररूपम्–सप्तम्यन्तम्।

**अचोऽन्त्यादि टि।** अचः–पष्ठ्यन्तम्। अन्त्यादि–प्रथमान्तम्। टि–प्रथमान्तम्।

**ओमाङोश्च।** ओमाङोः–सप्तम्यन्तम्। च–अव्ययपदम्।

**अव्यक्तानुकरणस्यात इतौ।** अव्यक्ताऽनुकरणस्य–पष्ठ्यन्तम्। अतः–पञ्चम्यन्तम्। इतौ–सप्तम्यन्तम्।

**नाम्रेडितस्यान्त्यस्य तु वा।** न–अव्ययपदम्। आम्रेडितस्य–पष्ठ्यन्तम्। अन्त्यस्य–पष्ठ्यन्तम्। तु–प्रथमान्तम्। वा–अव्ययपदम्।

**तस्य परम्।** तस्य–पष्ठ्यन्तम्। परम्–प्रथमान्तम्। आम्रेडितं–प्रथमान्तम्।

**झलां जशोऽन्ते।** झलां–पष्ठ्यन्तम्। जशः–प्रथमान्तम्। अन्ते–सप्तम्यन्तम्।

अकः सवर्णे दीर्घः। अकः—पञ्चम्यन्तम् सवर्णे—सप्तम्यन्तम्। दीर्घः—प्रथमान्तम्।

एङः पदान्तादति। एङः—पञ्चम्यन्तम्। पदान्तात्—पञ्चम्यन्तम्। अति—सप्तम्यन्तम्।

सर्वत्र विभाषा गोः। सर्वत्र-अव्ययपदम्। विभाषा—प्रथमान्तम्। गोः—षष्ठ्यन्तम्।

अवङ् स्फोटायनस्य। अवङ्—प्रथमान्तं। स्फोटायनस्य—षष्ठ्यन्तम्।

इन्द्रे च। इन्द्रे—सप्तम्यन्तम्। च—अव्ययपदम्।

## अथ प्रकृतिभावः।

प्लुतप्रगृह्या अचि नित्यम्। प्लुतप्रगृह्याः—प्रथमान्तम्। अचि—सप्तम्यन्तम्। नित्यं—प्रथमान्तम्।

इकोऽसवर्णे। इकः—षष्ठ्यन्तम्। प्रथमान्तं वा। असवर्णे—सप्तम्यन्तम्। शाकल्यस्य—षष्ठ्यन्तम्। ह्रस्वः—प्रथमान्तम्। च—अव्ययपदम्।

वाक्यस्य टेः प्लुत उदात्तः। वाक्यस्य—षष्ठ्यन्तम्। टेः—षष्ठ्यन्तम्। प्लुतः—प्रथमान्तम्। उदात्तः—प्रथमान्तम्।

प्रत्यभिवादेऽशूद्रे। प्रत्यभिवादे—सप्तम्यन्तम्। अशूद्रे—सप्तम्यन्तम्।

दूराद्धूते च। दूरात्—पञ्चम्यन्तम्। हूते—सप्तम्यन्तम्। च—अव्ययपदम्।

हैहेप्रयोगे। हैहेप्रयोगे—सप्तम्यन्तम्। हैहयोः—षष्ठ्यन्तम्।

गुरोरनृतः। गुरोः—षष्ठ्यन्तम्। अनृतः—षष्ठ्यन्तम्। अनन्त्यस्य—षष्ठ्यन्तम्। अपि—अव्ययपदम्। एकैकस्य—षष्ठ्यन्तम्। प्राचाम्—षष्ठ्यन्तम्।

अप्लुतवदुपस्थिते। अप्लुतवत्—अव्ययपदम्। उपस्थिते—सप्तम्यन्तम्।

ई३चाक्र। ई३लुप्तप्रथमान्तम्। चाक्रवर्मणस्य—षष्ठ्यन्तम्।

ईदूदेत्। ईदूदेत्—प्रथमान्तम्। द्विवचनम्—प्रथमान्तम्। प्रगृह्यम्—प्रथमान्तम्।

अदसो मात्। अदसः—पञ्चम्यन्तम्। मात्—प्रथमान्तम्।

शे। शे—प्रथमान्तम्।

निपात एकाजनाङ्। निपातः—प्रथमान्तम्। एकाच् प्रथमान्तम्। अनाङ् प्रथमान्तम्।

ओत्। ओत्—प्रथमान्तम्।

संबुद्धौ शाक। सम्बुद्धौ—सप्तम्यन्तम्। शाकल्यस्य—षष्ठ्यन्तम्। इतौ—सप्तम्यन्तम्। अनार्षे—सप्तम्यन्तम्।

उञः। उञः—षष्ठ्यन्तम्।

ऊँ। प्रथमान्तम्।

मय उञः। मयः—पञ्चम्यन्तम्। उञः—षष्ठ्यन्तम्। वः—प्रथमान्तम्। वा—अव्ययपदम्।

ईदूतौ च। ईदूतौ—प्रथमान्तम्। च—अव्ययपदम्। सप्तम्यर्थे—सप्तम्यन्तम्।

अणोऽप्रगृह्यस्य। अणः—षष्ठ्यन्तम्। अप्रगृह्यस्य षष्ठ्यन्तम्। अनुनासिकः प्रथमान्तम्।

## * इत्यच्सन्धिः। *

स्तोः श्चुना श्चुः। स्तोः—षष्ठ्यन्तम्। श्चुना—तृतीयान्तम्। श्चुः—प्रथमान्तम्।

शात्। पञ्चम्यन्तम्।

ष्टुना ष्टुः। ष्टुना—तृतीयान्तम्। ष्टुः—प्रथमान्तम्।

न पदान्ताट्टोरनाम्। न—अव्ययपदम्। पदान्तात्—पञ्चम्यन्तम्। टोः—षष्ठ्यन्तम्। अनाम्—लुप्तषष्ठ्यन्तम्।

तोः षि। तोः—षष्ठ्यन्तम्। षि—सप्तम्यन्तम्।

यरोऽनुनासिके। यरः—षष्ठ्यन्तम्। अनुनासिके—सप्तम्यन्तम्। अनुनासिकः—प्रथमान्तम्। वा—अव्ययपदम्।

तोर्लि। तोः–षष्ठ्यन्तम्। लि–सप्तम्यन्तम्।

उदः स्थास्तम्भोः। उदः–पञ्चम्यन्तम्। स्थास्तम्भोः–षष्ठ्यन्तम्। पूर्वस्य–षष्ठ्यन्तम्।

झयो होऽन्यतरस्याम्। झयः-पञ्चम्यन्तम्। हः–षष्ठ्यन्तम्। अन्यतरस्याम्–अव्ययपदम्।

शश्छोऽटि। श–षष्ठ्यन्तम्। छः–प्रथमान्तम्। अटि–सप्तम्यन्तम्।

खरि च। खरि–सप्तम्यन्तम्। च–अव्ययपदम्।

मोऽनुस्वारः। मः-षष्ठ्यन्तम्। अनुस्वारः–प्रथमान्तम्।

नश्चापदान्तस्य झलि। नः–षष्ठ्यन्तम्। च–अव्ययपदम्। अपदान्तस्य–षष्ठ्यन्तम्। झलि–सप्तम्यन्तम्।

अनुस्वारस्य ययि। अनुस्वारस्य–षष्ठ्यन्तम्। ययि–सप्तम्यन्तम्। परसवर्णः–प्रथमान्तम्। [ परेति लुप्तषष्ठ्यन्तं वा ]।

वा पदान्तस्य। वा–अव्ययपदम्। पदान्तस्य–षष्ठ्यन्तम्।

मो राजि समः क्वौ। मः–षष्ठ्यन्तम्। राजि–सप्तम्यन्तम्। समः–षष्ठ्यन्तम्। क्वौ–सप्तम्यन्तम्।

हे मपरे वा। हे–सप्तम्यन्तम्। मपरे–सप्तम्यन्तम्। वा–अव्ययपदम्।

यथासङ्ख्यमनुदेशः समानाम्। यथासंख्यम्–अव्ययपदम्। अनुदेशः–प्रथमान्तम्। समानाम्–षष्ठ्यन्तम्।

नपरे नः। नपरे–सप्तम्यन्तम्। नः–प्रथमान्तम्।

ङ्णोः कुक्। ङ्णोः–षष्ठ्यन्तम्। कुक्–प्रथमान्तम्। टुक् प्रथमान्तम्। शरि सप्तम्यन्तम्।

डः सि धुट्। डः–पञ्चम्यन्तम्। सि–सप्तम्यन्तम्। धुट्–प्रथमान्तम्।

नश्च। नः–पञ्चम्यन्तम्। च–अव्ययपदम्।

शि तुक्। शि–सप्तम्यन्तम्। तुक्–प्रथमान्तम्।

ङमो ह्रस्वादचि ङमुण्नित्यम्। ङमः–पञ्चम्यन्तम्। ह्रस्वात्–पञ्चम्यन्तम्। अचि–सप्तम्यन्तम्। ङमुट्–प्रथमान्तम्। नित्यम्–क्रियाविशेषणं द्वितीयान्तम्।

समः सुटि। समः–षष्ठ्यन्तम्। सुटि–सप्तम्यन्तम्।

अत्राऽनुनासिकः पूर्वस्य तु वा। अत्र–अव्ययपदम्। अनुनासिकः–प्रथमान्तम्। पूर्वस्य–षष्ठ्यन्तम्। तु–अव्ययपदम्। वा–अव्ययपदम्।

अनुनासिकात्परोऽनुस्वारः। अनुनासिकात्–पञ्चम्यन्तम्। परः–प्रथमान्तम्। अनुस्वारः–प्रथमान्तम्।

विसर्जनीयस्य सः। विसर्जनीयस्य–षष्ठ्यन्तम्। सः–प्रथमान्तम्।

पुमः खय्यम्परे। पुमः–षष्ठ्यन्तम्। खयि–सप्तम्यन्तम्। अम्परे–सप्तम्यन्तम्।

नश्छव्यप्रशान्। नः–षष्ठ्यन्तम्। छवि–सप्तम्यन्तम्। अप्रशान्–लुप्तषष्ठ्यन्तम्।

नॄन्पे। नॄन्–लुप्त द्वितीयान्तानुकरणम्। षष्ठ्यन्तम्। पे–सप्तम्यन्तम्।

कुप्वोः ≍क≍पौ च। कुप्वोः–सप्तम्यन्तम्। ≍क≍पौ–प्रथमान्तम्। च–अव्ययपदम्।

कानाम्रेडिते। कान्–द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम्। आम्रेडिते–सप्तम्यन्तम्।

कस्कादिषु च। कस्कादिषु–सप्तम्यन्तम्। च–अव्ययपदम्।

संहितायाम्। संहितायाम्–सप्तम्यन्तम्।

छे च। छे–सप्तम्यन्तम्। च–अव्ययपदम्।

**आड्माङोश्च** । आड्माङोः–षष्ठ्यन्तम् । च–अव्ययपदम् ।

**दीर्घात्** । दीर्घात्–पञ्चम्यन्तम् ।

**पदान्ताद्वा** । पदान्तात्–पञ्चम्यन्तम् । वा–अव्ययपदम् । **इति हल्सन्धिः** ।

**शर्परे विसर्जनीयः** । शर्परे–सप्तम्यन्तम् । विसर्जनीयः–प्रथमान्तम् ।

**वा शरि** । वा–अव्ययपदम् । शरि–सप्तम्यन्तम् ।

**सोऽपदादौ** । सः–प्रथमान्तम् । अपदादौ–सप्तम्यन्तम् ।

**इणः षः** । इण.–पञ्चम्यन्तम् । षः–प्रथमान्तम् ।

**नमस्पुरसोर्गत्योः** । नमस्पुरसोः–षष्ठ्यन्तम् । गत्योः–षष्ठ्यन्तम् ।

**इदुदुपधस्य चाप्रत्ययस्य** । इदुदुपधस्य–षष्ठ्यन्तम् । च–अव्ययपदम् । अप्रत्ययस्य–षष्ठ्यन्तम् ।

**तिरसोऽन्यतरस्याम्** । तिरसः–षष्ठ्यन्तम् । अन्यतरस्याम्–अव्ययपदम् ।

**द्विस्त्रिश्चतुरिति कृत्वोऽर्थे** । द्विःस्त्रिचतुः–लुप्तषष्ठ्यन्तम् । इति–अव्ययपदम् । कृत्वोर्थे–सप्तम्यन्तम् ।

**इसुसोः सामर्थ्ये** । इसुसोः–षष्ठ्यन्तम् । सामर्थ्ये–सप्तम्यन्तम ।

**नित्यं समासे** । नित्यम्–प्रथमान्तम् । समासे–सप्तम्यन्तम् । अनुत्तपदस्थस्य षष्ठ्यन्तम् ।

**अतः कृकमि** । अतः–पञ्चम्यन्तम् । कृकमिकंस॰॰पु–सप्तम्यन्तम् । अनव्ययस्य-षष्ठ्यन्तम् ।

**अधः शिरसो** । अधःशिरसी–षष्ठ्यर्थे प्रथमान्तम् । पदे–सप्तम्यन्तम् ।

**ससजुषो रुः** । ससजुषोः–षष्ठ्यन्तम् । रुः–प्रथमान्तम् ।

**अतो रोः** । अतः–पञ्चम्यन्तम् । रोः–षष्ठ्यन्तम् । अप्लुतात्–पञ्चम्यन्तम् । अप्लुते–सप्तम्यन्तम् ।

**प्रथमयोः** । प्रथमयोः–षष्ठ्यन्तम् । पूर्वसवर्णः–प्रथमान्तम् ।

**नादिचि** । न–अव्ययपदम् । आत्–पञ्चम्यन्तम् । इचि–सप्तम्यन्तम् ।

**हशि च** । हशि–सप्तम्यन्तम् । च–अव्ययपदम् ।

**भोभगोअघोअपूर्वस्य** । भोभगो अघो अपूर्वस्य–षष्ठ्यन्तम् । यः–प्रथमान्तम् । अशि–सप्तम्यन्तम् ।

**व्योर्लघुप्रयत्नतरः** । व्योः–षष्ठ्यन्तम् । लघुप्रयत्नतरः–प्रथमान्तम् । शाकटायनस्य–षष्ठ्यन्तम् ।

**ओतो गार्ग्यस्य** । ओतः–पञ्चम्यन्तम् । गार्ग्यस्य–षष्ठ्यन्तम् ।

**उञि च पदे** । उञि –सप्तम्यन्तम् । च–अव्ययपदम् । पदे–सप्तम्यन्तम् ।

**हलि सर्वेषाम्** । हलि–सप्तम्यन्तम् । सर्वेषाम्–षष्ठ्यन्तम् ।

**रोऽसुपि** । रः–प्रथमान्तम् । असुपि–सप्तम्यन्तम् ।

**रो रि** । रोः–षष्ठ्यन्तम् । रि–सप्तम्यन्तम् ।

**ढ्रलोपे** । ढ्रलोपे–सप्तम्यन्तम् । पूर्वस्य–षष्ठ्यन्तम् । दीर्घः–प्रथमान्तम् । अणः–षष्ठ्यन्तम् ।

**विप्रतिषेधे परं** । विप्रतिषेधे–सप्तम्यन्तम् । परम्–प्रथमान्तम । कार्यम्–प्रथमान्तम् ।

**एतत्तदोः** । एतत्तदोः–षष्ठ्यन्तम् । सु इति-लुप्तषष्ठ्यन्तं । लोपःप्रथमान्तम् । अकः–षष्ठ्यन्तम् । अनञ्समासे–सप्तम्यन्तम् । हलि–सप्तम्यन्तम् ।

**सोऽचि लोपे** । ससिति–प्रथमैकवचनतच्छब्दानुकरणं लुप्तषष्ठ्यन्तम् । अचि–सप्तम्यन्तम् ।

लोपे–सप्तम्यन्तम्। चेत्–अव्ययपदम्। पादपूरणं–प्रथमान्तम्।

॥ इति स्वादिसन्धिः ॥

अर्थवदधातुः। अर्थवत्–प्रथमान्तम्। अधातुः–प्रथमान्तम्। अप्रत्ययः–प्रथमान्तं। प्रातिपदिकम्–प्रथमान्तम्।

कृत्तद्धितसमासाश्च। कृत्तद्धितसमासाः–प्रथमान्तम्। च–अव्ययपदम्।

प्रत्ययः। प्रथमान्तम्।

परश्च। परः–प्रथमान्तं। च–अव्ययपदम्।

ङ्याप्प्रातिपदिकात्। पञ्चम्यन्तम्।

स्वौजसमौट्। स्वौजसमौट्···। सुप्–प्रथमान्तम्।

विभक्तिश्च। विभक्तिः–प्रथमान्तम्। च–अव्ययपदम्।

सुपः। षष्ठ्यन्तम्।

द्व्येकयोर्द्वि। द्व्येकयोः–षष्ठ्यन्तम्। द्विवचनैकवचने–प्रथमान्तम्।

बहुषु बहुवचनम्। बहुषु–सप्तम्यन्तम्। बहुवचनम्–प्रथमान्तम्।

सरूपाणामेक शेषः। सरूपाणां–षष्ठ्यन्तम्। एक इतिलुप्तषष्ठ्यन्तं। शेषः–प्रथमान्तम्। एकविभक्तौ–सप्तम्यन्तम्।

चुटू। प्रथमान्तम्।

न विभक्तौ। न–अव्ययपदम्। विभक्तौ–सप्तम्यन्तम्। तुस्माः–प्रथमान्तम्।

अतो गुणे। अतः–पञ्चम्यन्तम्। गुणे–सप्तम्यन्तम्।

एकवचनं संबुद्धिः। एकवचनं–प्रथमान्तम्। संबुद्धिः–प्रथमान्तम्।

एङ्ह्रस्वात्संबुद्धेः। एङ्ह्रस्वात्–पञ्चम्यन्तम्। सम्बुद्धेः–षष्ठ्यन्तम्।

अमि पूर्वः। अमि–सप्तम्यन्तम्। पूर्वः–प्रथमान्तम्।

लशक्वतद्धिते। लशक्‌–प्रथमान्तम्। अतद्धिते–सप्तम्यन्तम्।

तस्माच्छसो नः। तस्मात्–पञ्चम्यन्तम्। शसः–षष्ठ्यन्तम्। नः–प्रथमान्तम्। पुंसि–सप्तम्यन्तम्।

अट्कुप्वाङ्। अट्कुप्वाङ्नुम्व्यवाये–सप्तम्यन्तम्। अपि–अव्ययपदम्।

पदान्तस्य। षष्ठ्यन्तम्।

यस्मात्प्रत्ययविधिः। यस्मात्–पञ्चम्यन्तम्। प्रत्ययविधिः–प्रथमान्तम्। तदादि–प्रथमान्तम्। प्रत्यये–सप्तम्यन्तम। अङ्गम्–प्रथमान्तम्।

अङ्गस्य। षष्ठ्यन्तम्।

टाङसिङसामिनात्स्याः। टाङसिङसाम्–षष्ठ्यन्तम्। इनात्स्याः–प्रथमान्तम्।

सुपि च। सुपि–सप्तम्यन्तम्। च–अव्ययपदम्।

अतो भिस ऐस्। अतः–पञ्चम्यन्तम्। भिसः–षष्ठ्यन्तम्। ऐस्–प्रथमान्तम्।

ङेर्यः। ङेः–षष्ठ्यन्तम्। यः–प्रथमान्तम्।

बहुवचने झल्येत्। बहुवचने–सप्तम्यन्तम्। झलि–सप्तम्यन्तम्। एत्–प्रथमान्तम्।

वाऽवसाने। वा–अव्ययपदम्। अवसाने–सप्तम्यन्तम्।

ओसि च। ओसि–सप्तम्यन्तम्। च–अव्ययपदम्।

ह्रस्वनद्यापः। ह्रस्वनद्यापः–पञ्चम्यन्तम्। नुट्–प्रथमान्तम्।

नामि। सप्तम्यन्तम्।

अपदान्तस्य मूर्धन्यः। अपदान्तस्य–षष्ठ्यन्तम्। मूर्धन्यः–प्रथमान्तम्।

इण्कोः। षष्ठ्यन्तम्।

आदेशप्रत्यययोः। आदेशप्रत्यययोः षष्ठ्यन्तम्।

**सर्वादीनि सर्वनामानि ।** सर्वादीनि-प्रथमान्तम् । सर्वनामानि-प्रथमान्तम् ।

**जसः शी ।** जसः-षष्ठ्यन्तम् । शी-लुप्त प्रथमान्तम् ।

**सर्वनाम्नः स्मै ।** सर्वनाम्नः-षष्ठ्यन्तम् । स्मै-लुप्तप्रथमान्तम् ।

**ङसिङ्योः स्मात्स्मिनौ ।** ङसिङ्योः-षष्ठ्यन्तम् । स्मात्स्मिनौ-प्रथमान्तम् ।

**आमि सर्वनाम्नः ।** आमि-सप्तम्यन्तम् । सर्वनाम्नः-षष्ठ्यन्तम् । सुट्-प्रथमान्तम् ।

**पूर्वपरावरदक्षिणो ।** पूर्वपरावरदक्षिणोत्तरापराधराणि-प्रथमान्तम् । व्यवस्थायाम्-सप्तम्यन्तम् । असंज्ञायाम्-सप्तम्यन्तम् ।

**स्वमज्ञाति ।** स्वं-प्रथमान्तम् । अज्ञातिधनाख्यायाम्-सप्तम्यन्तम् ।

**अन्तरं बहिर्योगोपसंख्यानयोः।** अन्तरम्-प्रथमान्तम् । बहिर्योगपसंख्यानयोः-सप्तम्यन्तम् ।

**पूर्वादिभ्यो नवभ्यो वा ।** पूर्वादिभ्यः-पञ्चम्यन्तम् । नवभ्यः-पञ्चम्यन्तम् । वा-अव्ययपदम् ।

**न बहुव्रीहौ ।** न-अव्ययपदम । बहुव्रीहौ-सप्तम्यन्तम् ।

**तृतीयासमासे ।** सप्तम्यन्तम् ।

**द्वन्द्वे च ।** द्वन्द्वे-सप्तम्यन्तम्। च-अव्ययपदम् ।

**विभाषा जसि ।** विभाषा-प्रथमान्तम् । जसि-सप्तम्यन्तम् ।

**प्रथमचरम ।** प्रथमचरमतयाल्पार्धकतिपयनेमाः-प्रथमान्तम् । च-अव्ययपदम् ।

**जरायाः ।** जरायाः-पष्ठ्यन्तम् । जरस्-प्रथमान्तम् । अन्यतरस्याम्-अव्ययपदम् ।

**पद्न्नोमास् ।** पद्न्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासन्-प्रथमान्तम् । शस्प्रभृतिषु-सप्तम्यन्तम् ।

**सुडनपुंसकस्य ।** सुट्-प्रथमान्तम् । अनपुंसकस्य-षष्ठ्यन्तम् ।

**स्वादिष्वसर्वनामस्थाने ।** स्वादिषु-सप्तम्यन्तम् । असर्वनामस्थाने-सप्तम्यन्तम् ।

**यचि भम् ।** यचि-सप्तम्यन्तम् । भम्-प्रथमान्तम् ।

**आ कडारादेका सञ्ज्ञा।** आ अव्ययपदं। कडारात्-पञ्चम्यन्तम् । एका-प्रथमान्तम् । सञ्ज्ञा-प्रथमान्तम् ।

**भस्य ।** षष्ठ्यन्तम् ।

**अल्लोपोऽनः ।** अत्-लुप्तषष्ठ्यन्तम् । लोपः-प्रथमान्तम् । अनः-षष्ठ्यन्तम् ।

**रषाभ्यां ।** रषाभ्यां-पञ्चम्यन्तम् । नः-षष्ठ्यन्तम् । णः-प्रथमान्तं । समानपदे-सप्तम्यन्तम् ।

**न लोपः ।** न-इति लुप्तषष्ठ्यन्तं । लोपः-प्रथमान्तम्। प्रातिपदिक-इति लुप्तषष्ठ्यन्तम् । अन्तस्य-षष्ठ्यन्तम् ।

**विभाषा ङिश्योः ।** विभाषा-प्रथमान्तम् । ङिश्योः-सप्तम्यन्तम् ।

**संख्याविसाय ।** संख्याविसायपूर्वस्य-षष्ठ्यन्तम् । अह्नस्य-षष्ठ्यन्तम् । अहन्-प्रथमान्तम् । अन्यतरस्याम्-अव्ययपदम् । ङौ-सप्तम्यन्तम् ।

**दीर्घाज्जसि च ।** दीर्घात्-पञ्चम्यन्तम् । जसि-सप्तम्यन्तम् । च-अव्ययपदम् ।

**आतो धातोः ।** आतः-षष्ठ्यन्तम् । धातोः-षष्ठ्यन्तम् ।

**जसि च ।** जसि-सप्तम्यन्तम् । च-अव्ययपदम् ।

ह्रस्वस्य गुणः । ह्रस्वस्य–षष्ठ्यन्तम् । गुणः–प्रथमान्तम् ।

शेषो घ्यसखि । शेषः–प्रथमान्तम् । घि–प्रथमान्तम् । असखि–प्रथमान्तम् ।

आङो नाऽस्त्रियाम् । आङः–षष्ठ्यन्तम् । ना–प्रथमान्तम् । अस्त्रियाम्–सप्तम्यन्तम् ।

घेर्ङिति । घेः–षष्ठ्यन्तम् । ङिति–सप्तम्यन्तम् ।

ङसिङसोश्च । ङसिङसोः–सप्तम्यन्तम् । च–अव्ययपदम् ।

अच्च घेः । अत्–प्रथमान्तम् । च–अव्ययपदम् । घेः–षष्ठ्यन्तम् ।

अनङ् सौ । अनङ्–प्रथमान्तम् । सौ–सप्तम्यन्तम् ।

अलोऽन्त्यात्पूर्वः । अलः–पञ्चम्यन्तम् । अन्त्यात्–पञ्चम्यन्तम् । पूर्वः–प्रथमान्तम् । उपधा–प्रथमान्तम् ।

सर्वनामस्थाने चा । सर्वनामस्थाने–सप्तम्यन्तम् । च–अव्ययपदम् । असम्बुद्धौ–सप्तम्यन्तम् ।

अपृक्तः । अपृक्तः–प्रथमान्तम् । एकाल्–प्रथमान्तम् । प्रत्ययः–प्रथमान्तम् ।

हल्ङ्याब्भ्यः । हल्ङ्याब्भ्यः–पञ्चम्यन्तम् । दीर्घात्–पञ्चम्यन्तम् । सुतिसि–लुप्तषष्ठ्यन्तं । सुतिस्यपृक्तम्–प्रथमान्तम् वा । हल्–प्रथमान्तम् ।

सख्युरसम्बुद्धौ । सख्युः–पञ्चम्यन्तम् । असम्बुद्धौ–सप्तम्यन्तम् ।

अचो ञ्णिति । अचः–षष्ठ्यन्तम् । ञ्णिति–सप्तम्यन्तम् ।

ख्यत्यात् । ख्यत्यात्–पञ्चम्यन्तम् । परस्य–षष्ठ्यन्तम् ।

औत् । प्रथमान्तम् ।

पतिः समास एव । पतिः–प्रथमान्तम् । समासे–सप्तम्यन्तम् । एव–अव्ययपदम् ।

बहुगणवतुडति संख्या । बहुगणवतुडति–प्रथमान्तम् । संख्या–प्रथमान्तम् ।

डति च । डति–प्रथमान्तम् । च–अव्ययपदम् ।

प्रत्ययस्य लुक् । प्रत्ययस्य–षष्ठ्यन्तम् । लुक्श्लुलुपः–प्रथमान्तम् ।

षड्भ्यो लुक् । षड्भ्यः–पञ्चम्यन्तम् । लुक्–प्रथमान्तम् ।

प्रत्ययलोपे । प्रत्ययलोपे–सप्तम्यन्तम् । प्रत्ययलक्षणम्–प्रथमान्तम् ।

न लुमताङ्गस्य । न–अव्ययपदम् । लुमता–तृतीयान्तम् । अङ्गस्य–षष्ठ्यन्तम् ।

त्रेस्त्रयः । त्रेः–षष्ठ्यन्तम् । त्रयः–प्रथमान्तम् ।

त्यदादीनामः । त्यदादीनाम्–षष्ठ्यन्तम् । अः–प्रथमान्तम् ।

यू स्त्र्याख्यौ नदी । यू–प्रथमान्तम् । स्त्र्याख्यौ–प्रथमान्तम् । नदी–प्रथमान्तम् ।

अम्बार्थनद्योर्ह्रस्वः । अम्बार्थनद्योः–षष्ठ्यन्तम् । ह्रस्वः–प्रथमान्तम् ।

आण नद्याः । आट्–प्रथमान्तम् । नद्याः–पञ्चम्यन्तम् ।

आटश्च । आटः–पञ्चम्यन्तम् । च–अव्ययपदम् ।

ङेराम् । ङेः–षष्ठ्यन्तम् । आम्–प्रथमान्तम् । नद्याम्नीभ्यः–पञ्चम्यन्तम् ।

अचिश्नुधातु । अचि–सप्तम्यन्तम् । श्नुधातुभ्रुवां–षष्ठ्यन्तम् । य्वोः–षष्ठ्यन्तम् । इयङुवङौ–प्रथमान्तम् ।

एरनेकाचः । एः–षष्ठ्यन्तम् । अनेकाचः–षष्ठ्यन्तम् । असंयोगपूर्वस्य–षष्ठ्यन्तम् ।

**न भूसुधियोः।** न–अव्ययपदम्। भूसुधियोः–षष्ठ्यन्तम्।

**तृज्वत्क्रोष्टुः।** तृज्वत्–अव्ययपदम्। क्रोष्टुः–प्रथमान्तम्।

**ऋतो ङि।** ऋतः–पष्ठ्यन्तम्। ङि–सर्वनामस्थानयोः–सप्तम्यन्तम्।

**ऋदुशनस्।** ऋदुशनस्पुरुदंसोऽनेहसां–षष्ठ्यन्तम्। च–अव्ययपदम्।

**अप्तृन्तृच्।** अप्तृन् तृच्... प्रशास्तृणाम्–पष्ठ्यन्तम्।

**विभाषा तृतीयादिष्वचि।** विभाषा–प्रथमान्तम्। तृतीयादिपु–सप्तम्यन्तम्। अचि–सप्तम्यन्तम्।

**ऋत उत्।** ऋतः– पष्ठ्यन्तं, पञ्चम्यन्तं वा। उत्–प्रथमान्तम्।

**रात्सस्य।** रात्–पञ्चम्यन्तम्। सस्य–षष्ठ्यन्तम्।

**ओः सुपि।** ओः–पष्ठ्यन्तम्। सुपि–सप्तम्यन्तम्।

**वर्षाभ्वश्च।** वर्षाभ्वः–षष्ठ्यन्तम्। च–अव्ययपदम्।

**नृ च।** नृ–लुप्तषष्ठ्यन्तम्। च–अव्ययपदम्।

**गोतो णित्।** गोतः–पञ्चम्यन्तम्। णित्–प्रथमान्तम्।

**औतोऽम्शसोः।** आ–प्रथमान्तम्। ओतः–पञ्चम्यन्तम्। अम्शसोः–षष्ठ्यन्तम्।

**रायो हलि।** रायः–षष्ठ्यन्तम्। हलि–सप्तम्यन्तम्। इत्यजन्ताः पुँल्लिङ्गाः।

**औङ आपः।** औङः–षष्ठ्यन्तम्। आपः–पञ्चम्यन्तम्।

**संबुद्धौ च।** संबुद्धौ–सप्तम्यन्तम्। च–अव्ययपदम्।

**आङि चापः।** आङि–सप्तम्यन्तम्। च–अव्ययपदम्। आपः–पञ्चम्यन्तम्।

**याडापः।** याट्–प्रथमान्तम्। आपः–पञ्चम्यन्तम्।

**सर्वनाम्नः।** सर्वनाम्न–पञ्चम्यन्तम्। स्याट्–प्रथमान्तम्। ह्रस्वः–प्रथमान्तम्। च–अव्ययपदम्।

**विभाषा दिक्।** विभाषा–प्रथमान्तम्। दिक्समासे–सप्तम्यन्तम्। बहुव्रीहौ–सप्तम्यन्तम्।

**विभाषा द्वितीय।** विभाषा–प्रथमान्तम्। द्वितीयातृतीयाभ्यां–पञ्चम्यन्तम्।

**त्रश्चभ्रस्ज।** त्रश्चभ्रस्ज......च्छशां–षष्ठ्यन्तम्। पः–प्रथमान्तम्।

**षढोः।** षढोः–षष्ठ्यन्तम्। कः–प्रथमान्तम्। सि–प्रथमान्तम्।

**ङिति ह्रस्वश्च।** ङिति–प्रथमान्तं। ह्रस्वः–प्रथमान्तं। च– अव्ययपदम्।

**इदुद्भ्याम्**–पञ्चम्यन्तम्।

**त्रिचतुरोःस्त्रि।** त्रिचतुरोः–षष्ठ्यन्तम्। स्त्रियाम् सप्तम्यन्तम्। तिसृ चतसृ लुप्त-प्रथमान्तम्।

**अचि र ऋतः।** अचि–सप्तम्यन्तम्। रः–प्रथमान्तम्। ऋतः–षष्ठ्यन्तम्।

**न तिसृचतसृ।** न–अव्ययपदम्। तिसृचतसृ–लुप्तपष्ठ्यन्तम्।

**स्त्रियाः।** स्त्रियाः–षष्ठ्यन्तम्।

**वाम्शसोः।** वा–अव्ययपदम्। अम्शसोः–सप्तम्यन्तम्।

**नेयङुवङ्स्थानावस्त्री।** न–अव्ययपदं– इयङुवङ्स्थानौ–प्रथमान्तम्। अस्त्री–प्रथमान्तम्।

**वामि।** वा–अव्ययपदम्। आमि–सप्तम्यन्तम्।

**स्त्रियां च।** स्त्रियां–सप्तम्यन्तं। च–अव्ययपदम्।

**ऋन्नेभ्यो ङीप्।** ऋन्नेभ्यः–पञ्चम्यन्तम्। ङीप्–प्रथमान्तम्।

**एकाजुत्तरपदे णः।** एकाजुत्तरपदे–सप्तम्यन्तम्। णः–प्रथमान्तम्।

**न षट्स्वस्रादिभ्यः।** न–अव्ययपदम्। षट्स्वस्रादिभ्यः–पञ्चम्यन्तम्।

**इत्यजन्ताः स्त्रीलिङ्गाः।**

**अतोऽम्।** अतः–पञ्चम्यन्तम्। अम्–प्रथमान्तम्।

**नपुंसकाच्च।** नपुंसकात्–पञ्चम्यन्तम्। च–अव्ययपदम्।

**यस्येति च।** यस्य–षष्ठ्यन्तम्। ईति–सप्तम्यन्तम्। च–अव्ययपदम्।

**जश्शसोः शिः।** जश्शसोः–षष्ठ्यन्तम्। शिः–प्रथमान्तम्।

**शि सर्वनाम।** शि–प्रथमान्तम्। सर्वनामस्थानम्–प्रथमान्तम्।

**नपुंसकस्य झलचः।** नपुंसकस्य–षष्ठ्यन्तम्। झलचः–षष्ठ्यन्तम्।

**अद्ड्डतरादिभ्यः पञ्चभ्यः।** अद्ड्–प्रथमान्तम्। डतरादिभ्यः–पञ्चम्यन्तम्। पञ्चभ्यः पञ्चम्यन्तम्।

**टेः।** टेः–षष्ठ्यन्तम्।

**सान्तमहतः।** सान्त इति लुप्तषष्ठ्यन्तं। महतः–षष्ठ्यन्तम्। संयोगस्य–षष्ठ्यन्तम्।

**ह्रस्वो नपुंसके।** ह्रस्वः–प्रथमान्तम् नपुंसके–सप्तम्यन्तम्। प्रातिपदिकस्य–षष्ठ्यन्तम्।

**स्वमोर्नपुंसकात्।** स्वमोः–षष्ठ्यन्तम्। नपुंसकात्–पञ्चम्यन्तम्।

**इकोऽचि।** इकः–षष्ठ्यन्तम्। अचि–सप्तम्यन्तम्। विभक्तौ–सप्तम्यन्तम्।

**तृतीयादिषु।** तृतीयादिषु–सप्तम्यन्तम्। भाषितपुंस्कं–प्रथमान्तं। पुंवत्–अव्ययपदम्। गालवस्य–षष्ठ्यन्तम्।

**अस्थिदधि।** अस्थिदधिसक्थ्यक्ष्णां–षष्ठ्यन्तम्। अनङ्–प्रथमान्तम्। उदात्तः–प्रथमान्तम्।

**एच इग्घ्रस्वादेशे।** एचः–षष्ठ्यन्तम्। इक्–प्रथमान्तम्। ह्रस्वादेशे–सप्तम्यन्तम।

**इत्यजन्ता नपुंसकलिङ्गाः।**

**हो ढः।** हः–षष्ठ्यन्तम्। ढः–प्रथमान्तं।

**दादेर्धातोर्घः।** दादेः–षष्ठ्यन्तं, धातोः–षष्ठ्यन्तं। घः–प्रथमान्तम्।

**एकाचो।** एकाचः–षष्ठ्यन्तं। बशः–षष्ठ्यन्तं। भष्–प्रथमान्तं, झषन्तस्य–षष्ठ्यन्तं। स्ध्वोः–सप्तम्यन्तं।

**वा द्रुहमुह।** वा–अव्ययपदम्। द्रुहमुहष्णुहष्णिहां–षष्ठ्यन्तं।

**इग्यणः।** इक्–प्रथमान्तं। यणः–षष्ठ्यन्तं, सम्प्रसारणं–प्रथमान्तं।

**वाह ऊठ्।** वाहः–षष्ठ्यन्तम्। ऊठ–प्रथमान्तम्।

**सम्प्रसारणाच्च।** सम्प्रसारणात्–पञ्चम्यन्तम्। च–अव्ययपदं।

**चतुरनडुहोराम्रुदात्तः।** चतुरनडुहः–षष्ठ्यन्तम्। आम्–प्रथमान्तं। उदात्तः–प्रथमान्तम्।

**सावनडुहः।** सौ–सप्तम्यन्तम्। अनडुहः–षष्ठ्यन्तं।

**अम् सम्बुद्धौ।** अम्–प्रथमान्तं। संबुद्धौ–सप्तम्यन्तं।

**वसुस्रंसु।** वसुस्रंसुध्वंस्वनडुहां–षष्ठ्यन्तम्। दः–प्रथमान्तं।

**सहेः।** सहेः–षष्ठ्यन्तं। साडः–षष्ठ्यन्तम्। सः–प्रथमान्तं।

**दिव औत्।** दिवः—षष्ठ्यन्तं। औत्—प्रथमान्तं।

**दिव उत्।** दिवः—षष्ठ्यन्तं। उत्—प्रथमान्तम्।

**षट्चतुर्भ्यश्च।** षट्चतुर्भ्यः—पञ्चम्यन्तं। च—अव्ययपदं।

**रोः सुपि।** रोः—षष्ठ्यन्तम्। सुपि—सप्तम्यन्तं।

**शरोऽचि।** शरः—षष्ठ्यन्तं। अचि—सप्तम्यन्तं।

**मो नो धातोः।** मः—षष्ठ्यन्तं। नः—प्रथमान्तं। धातोः—षष्ठ्यन्तं।

**किमः कः।** किमः—षष्ठ्यन्तं, कः-प्रथमान्तं।

**इदमो मः।** इदमः—षष्ठ्यन्तं। मः—प्रथमान्तम्।

**इदोऽय् पुंसि।** इदः—षष्ठ्यन्तं। अय्—प्रथमान्तं। पुंसि—सप्तम्यन्तं।

**दश्च।** दः—षष्ठ्यन्तं। च—अव्ययपदं।

**अनाप्यकः।** अन्—प्रथमान्तं। आपि—सप्तम्यन्तं। अकः—षष्ठ्यन्तं।

**हलि लोपः।** हलि—सप्तम्यन्तं। लोपः—प्रथमान्तं।

**आद्यन्तवदेकस्मिन्।** आद्यन्तवत्—अव्ययपदं। एकस्मिन्—सप्तम्यन्तम्।

**नेदमदसोरकोः।** न—अव्ययपदं। इदमदसोः—षष्ठ्यन्तं। अकोः—षष्ठ्यन्तं।

**इदमोऽन्वादेशे।** इदमः—षष्ठ्यन्तं। अन्वादेशे—सप्तम्यन्तं। अश्—प्रथमान्तम्। अनुदात्तः—प्रथमान्तम्। तृतीयादौ—सप्तम्यन्तम्।

**द्वितीयाटौस्स्वेनः।** द्वितीयाटौस्सु—सप्तम्यन्तम्। एनः—प्रथमान्तम्।

**न ङिसंबुद्ध्योः।** न—अव्ययपदम्। ङिसंबुद्ध्योः—सप्तम्यन्तम्।

**नलोपः सुप्स्वर।** नलोपः—प्रथमान्तम्। सुप्स्वरसंज्ञातुग्विधिषु—सप्तम्यन्तम्। कृति—सप्तम्यन्तम्।

**हलि च।** हलि—सप्तम्यन्तम्। च—अव्ययपदम्।

**न संयोगाद्वमन्तात्।** न—अव्ययपदम्। संयोगात्—पञ्चम्यन्तम्। वमन्तात्—पञ्चम्यन्तम्।

**इन्हन्पूषार्यम्णां शौ।** इन्हन्—पूषार्यम्णां—षष्ठ्यन्तम्। शौ—सप्तम्यन्तम्।

**सौ च।** सौ—सप्तम्यन्तम्। च—अव्ययपदम्।

**हो हन्तेर्ञ्णिन्नेषु।** हः—षष्ठ्यन्तम्। हन्तेः—षष्ठ्यन्तम्। ञ्णिन्नेषु—सप्तम्यन्तम्।

**हन्तेः।** हन्तेः—षष्ठ्यन्तम्।

**अत्पूर्वस्य।** अत्पूर्वस्य—षष्ठ्यन्तम्।

**मघवा बहुलम्।** मघवा—षष्ठ्यर्थप्रथमान्तम्। बहुलम्—क्रियाविशेषणत्वाद्द्वितीयान्तम्।

**उगिदचां।** उगिदचां—षष्ठ्यन्तम्। सर्वनामस्थाने—सप्तम्यन्तम्। अधातोः—षष्ठ्यन्तम्।

**श्वयुव।** श्वयुवमघोनां—षष्ठ्यन्तम्। अतद्धिते—सप्तम्यन्तम्।

**न सम्प्रसारणे।** न—अव्ययपदम्। सम्प्रसारणे—सप्तम्यन्तम्। सम्प्रसारणं—प्रथमान्तम्।

**अर्वणस्त्र।** अर्वणः—षष्ठ्यन्तम्। तृ—प्रथमान्तम्। असौ—सप्तम्यन्तम्। अनञः—षष्ठ्यम्।

**पथिमथ्यृभुक्षामात्।** पथिमथ्यृभुक्षां—षष्ठ्यन्तम्। आत्—प्रथमान्तम्।

**इतोऽत्।** इतः—षष्ठ्यन्तं। अत्—प्रथमान्तम्। सर्वनामस्थाने—सप्तम्यन्तम्।

**थो न्थः।** थः—षष्ठ्यन्तम्। न्थः—प्रथमान्तं।

**भस्य टेर्लोपः।** भस्य—षष्ठ्यन्तम्। टेः—षष्ठ्यन्तं। लोपः—प्रथमान्तं।

ष्णान्ता षट्। ष्णान्ता–प्रथमान्तं। षट्–प्रथमान्तं।

नोपधायाः। षष्ठ्यन्तं।

अष्टन आ। अष्टनः–षष्ठ्यन्तं। आ–प्रथमान्तं। विभक्ती। सप्तम्यन्तं।

अष्टाभ्य औश्। अष्टाभ्यः–पञ्चम्यन्तं। औश्–प्रथमान्तम्।

ऋत्विग्दधृक। ऋत्वि........क्रुञ्चाम्–षष्ठ्यन्तं। च–अव्ययपदम्।

कृदतिङ्। कृत्–प्रथमान्तम्। अतिङ्–प्रथमान्तम्।

वेरपृक्तस्य। वेः–षष्ठ्यन्तम्। अपृक्तस्य–षष्ठ्यन्तम्।

युजेरसमासे। युजेः–षष्ठ्यन्तम्। असमासे–सप्तम्यन्तम्।

क्विन्प्रत्ययस्य। क्विन्प्रत्ययस्य–षष्ठ्यन्तं। कुः–प्रथमान्तम्।

चोः कुः। चोः–षष्ठ्यन्तम्। कुः–प्रथमान्तम्।

विश्वस्य। विश्वस्य–षष्ठ्यन्तं। वसुराटोः–सप्तम्यन्तम्।

स्कोः। स्कोः–षष्ठ्यन्तं। संयोगाद्योः–षष्ठ्यन्तं। अन्ते–सप्तम्यन्तम्। च–अव्ययपदं।

तदोः सः। तदोः–षष्ठ्यन्तम्। सः–षष्ठ्यन्तम्। सौ–सप्तम्यन्तम्। अनन्त्ययोः–षष्ठ्यन्तम्।

ङे प्रथमयोरम्। ङे–लुप्तषष्ठ्यन्तम्। प्रथमयोः–षष्ठ्यन्तम्। अम्–प्रथमान्तं।

मपर्यन्तस्य। मपर्यन्तस्य–षष्ठ्यन्तम्।

त्वाहौ सौ। त्वाहौ–प्रथमान्तम्। सौ–सप्तम्यन्तम्।

शेषे लोपः। शेषे–सप्तम्यन्तं। लोपः–प्रथमान्तम्।

युवावौ द्विवचने। युवावौ–प्रथमान्तम्। द्विवचने–सप्तम्यन्तम्।

प्रथमायाश्च। प्रथमायाः–षष्ठ्यन्तम्। च–अव्ययपदं। द्विवचने–सप्तम्यन्तम्। भाषायाम्–सप्तम्यन्तम्।

यूयवयौ जसि। यूयवयौ–प्रथमान्तम्। जसि–सप्तम्यन्तम्।

त्वमावेकवचने। त्वमौ–प्रथमान्तम्। एकवचने–सप्तम्यन्तम्।

द्वितीयायाञ्च। द्वितीयायां–सप्तम्यन्तं। च–अव्ययपदम्।

शसो न। शसः–षष्ठ्यन्तम्। न–लुप्त-प्रथमान्तम्।

योऽचि। यः–प्रथमान्तम्। अचि–सप्तम्यन्तम्।

युष्मदस्मदोः। युष्मदस्मदोः–षष्ठ्यन्तं। अनादेशे–सप्तम्यन्तम्।

तुभ्यमह्यौ। तुभ्यमह्यौ–प्रथमान्तं। ङयि–सप्तम्यन्तम्।

भ्यसोभ्यम्। भ्यसः–षष्ठ्यन्तम्। (अ)भ्यम्–प्रथमान्तम्।

एकवचनस्य च। एकवचनस्य–षष्ठ्यन्तं। च–अव्ययपदम्।

पञ्चम्या अत्। पञ्चम्याः–षष्ठ्यन्तम्। अत्–प्रथमान्तम्।

तवममौ ङसि। तवममौ–प्रथमान्तं। ङसि–सप्तम्यन्तम्।

युष्मदस्मद्भ्याम्। युष्मदस्मद्भ्याम्–पञ्चम्यन्तं। ङसः–षष्ठ्यन्तम्। अश्–प्रथमान्तम्।

साम आकम्। सामः–षष्ठ्यन्तम्। आकम्–प्रथमान्तम्।

पदस्य। पदस्य–षष्ठ्यन्तम्।

पदात्। पञ्चम्यन्तम्।

**अनुदात्तं सर्वमपादादौ** । अनुदात्तम्–प्रथमान्तं । सर्वं–प्रथमान्तम् । अपादादौ–सप्त०

**युष्मदस्मदोः** । युष्मदस्मदोः–षष्ठ्यन्तं । षष्ठीचतुर्थीद्वितीयास्थयोः–षष्ठ्यन्तं । वांनावौ–प्रथमान्तम् ।

**बहुवचनस्य** । बहुवचनस्य–षष्ठ्यन्तं । वस्नसौ–प्रथमान्तम् ।

**तेमयावेकवचनस्य** । तेमयौ–प्रथमान्तं । एकवचनस्य–षष्ठ्यन्तम् ।

**त्वामौ द्वितीयायाः** । त्वामौ–प्रथमान्तं । द्वितीयायाः–षष्ठ्यन्तम् ।

**न चवाहाऽहैवयुक्ते** । न–अव्ययपदं । चवाहाऽहैवयुक्ते–सप्तम्यन्तम् ।

**पश्यार्थैश्चानालोचने** । पश्यार्थैः–तृतीयान्तं । च–अव्ययपदम् । अनालोचने–सप्तम्यन्तम् ।

**सपूर्वायाः** । सपूर्वायाः–पञ्चम्यन्तं । प्रथमायाः–पञ्चम्यन्तं । विभाषा–प्रथमान्तम् ।

**आमन्त्रितम्** । आमन्त्रितम्–प्रथमान्तं । पूर्वम्–प्रथमान्तम् । अविद्यमानवत्–अव्ययपदम् ।

**नामन्त्रिते समानाऽधिकरणे** । न–अव्ययपदम् । आमन्त्रिते–सप्तम्यन्तम् । समानाऽधिकरणे–सप्तम्यन्तम् । सामान्यवचनं–प्रथमान्तम् ।

**विभाषितं विशेषवचने** । विभाषितं–प्रथमान्तं । विशेषवचने–सप्तम्यन्तम् ।

**पादः पत्** । पादः–षष्ठ्यन्तं । पत्–प्रथमान्तम् ।

**अनिदितां हलः** । अनिदितां–षष्ठ्यन्तम् । हलः–षष्ठ्यन्तं । उपधायाः–षष्ठ्यन्तं । क्ङिति सप्त०

**अचः** । अचः–षष्ठ्यन्तम् ।

**चौ** । चौ–सप्तम्यन्तम् ।

**विष्वग्देवयोश्च** । विष्वग्देवयोः–षष्ठ्यन्तं । च–अव्ययपदम् । टेः–षष्ठ्यन्तम् । अद्र्यञ्चतौ–सप्तम्यन्तम् । अप्रत्यये–सप्तम्यन्तम् ।

**अदसोऽसेः** । अदसः–षष्ठ्यन्तम् । असेः–षष्ठ्यन्तम् । दात्–पञ्चम्यन्तम् । उ–प्रथमान्तम् । दः–षष्ठ्यन्तं । मः–प्रथमान्तम् ।

**उद ईत्** । उदः–पञ्चम्यन्तम् । ईत्–प्रथमान्तम् ।

**समः समि** । समः–षष्ठ्यन्तं । समि–प्रथमान्तम् ।

**सहस्य सध्रिः** । सहस्य–षष्ठ्यन्तम्–सध्रिः–प्रथमान्तम् ।

**तिरसस्तिर्यलोपे** । तिरसः–षष्ठ्यन्तम् । तिरि–प्रथमान्तम् । अलोपे–सप्तम्यन्तम् ।

**नाञ्चेःपूजायाम्** । न–अव्ययपदम् । अञ्चेः–षष्ठ्यन्तं । पूजायाम्–सप्तम्यन्तम् ।

**अत्वसन्तस्य च** । अत्वसन्तस्य–षष्ठ्यन्तम् । च–अव्ययपदम् । अधातोः–षष्ठ्यन्तम् ।

**उभे अभ्यस्तम्** । उभे–प्रथमान्तम् । अभ्यस्तम्–प्रथमान्तम् ।

**नाभ्यस्ताच्छतुः** । न–अव्ययपदम् । अभ्यस्तात्–पञ्चम्यन्तं । शतुः–षष्ठ्यन्तम् ।

**जक्षित्यादयः** । जक्षित्यादयः–प्रथमान्तं । षट्–प्रथमान्तम् ।

**त्यदादिषु** । त्यदादिषु–सप्तम्यन्तं । दृशः–पञ्चम्यन्त । अनालोचने–सप्तम्यन्तम् । कञ्–प्रथमान्तं । च–अव्ययपदम् ।

**आ सर्वनाम्नः** । आ–प्रथमान्तं । सर्वनाम्नः–षष्ठ्यन्तम् ।

**नशेर्वा** । नशेः–षष्ठ्यन्तं । वा–अव्ययपदं ।

**स्पृशोऽनुदके** । स्पृशः–पञ्चम्यन्तम् । अनुदके–सप्तम्यन्तं । किन्–प्रथमान्तम् ।

**र्वोरुपधाया दीर्घः** । र्वोः–षष्ठ्यन्तम् ।

उपधायाः–पष्ठ्यन्तं। दीर्घः–प्रथमान्तम्। इकः–पष्ठ्यन्तम्।

**नुम्विसर्जनीय।** नुम्विसर्जनीयशर्व्यवाये-सप्तम्यन्तम्। अपि–अव्ययपदम्।

**वसोः सम्प्रसारणम्।** वसोः–पष्ठ्यन्तं। सम्प्रसारणम्–प्रथमान्तम्।

**पुंसोऽसुङ्।** पुंसः–पष्ठ्यन्तं। असुङ्–प्रथमान्तम्।

**अदस औ सुलोपश्च।** अदसः–पष्ठ्यन्तं। औ–प्रथमान्तं। सुलोपः–प्रथमान्तं। च–अव्ययपदम्।

**एत ईद्बहुवचने।** एतः–पष्ठ्यन्तम्। ईत्–प्रथमान्तं। बहुवचने–सप्तम्यन्तम्।

**न मु ने।** न–अव्ययपदं। मु–प्रथमान्तं। ने–सप्तम्यन्तम्। **इति हलन्ताः पुंलिङ्गाः।**

**नहो धः।** नहः–पष्ठयन्तं। धः–प्रथमान्तं।

**यः सौ।** यः–प्रथमान्तं। सौ–सप्तम्यन्तं।

**अपो भि।** अपः–पष्ठयन्तं। भि–सप्तम्यन्तम्। **इति हलन्ताः स्त्रीलिङ्गाः।**

**अहन्।** अहन्–लुप्तपष्ठयन्तम्।

**वा नपुंसकस्य।** वा–अव्ययपदम्। नपुंसकस्य–पष्ठयन्तम्।

**आच्छीनद्योर्नुम्।** आत्–पञ्चम्यन्तं। शीनद्योः–पष्ठयन्तं। नुम्–प्रथमान्तम्।

**शप्श्यनोर्नित्यम्।** शप्श्यनोः–पष्ठयन्तं। नित्यम्–द्वितीयान्तम्।

**॥ इति हलन्ता नपुंसकलिङ्गाः ॥**

**स्वरादिनिपातमव्ययम्।** स्वरादिनिपातम्–प्रथमान्तम्। अव्ययम्–प्रथमान्तम्।

**तद्धितश्चाऽसर्वविभक्तिः।** तद्धितः–प्रथमान्तम्। च–अव्ययपदम्। असर्वविभक्तिः–प्रथमान्तम्।

**कृन्मेजन्तः।** कृन्मेजन्तः–प्रथमान्तम्।

**क्त्वातोसुन्कसुनः।** क्त्वातोसुन्कसुनः–प्रथमान्तम्।

**अव्ययीभावश्च।** अव्ययीभावः–प्रथमान्तम्। च–अव्ययपदम्।

**अव्ययादाप्सुपः।** अव्ययात्–पञ्चम्यन्तम्। आप्सुपः–पष्ठयन्तम्॥ **इत्यव्ययानि॥**

**स्त्रियाम्।** स्त्रियाम्–सप्तम्यन्तम्।

**अजाद्यतष्टाप्।** अजाद्यतः–पञ्चम्यन्तं। टाप्–प्रथमान्तम्।

**उगितश्च।** उगितः–पञ्चम्यन्तम्। च–अव्ययपदम्।

**वनो र च।** वनः–पञ्चम्यन्तम्। र–लुप्तप्रथमान्तम्। च–अव्ययपदम्।

**पादोऽन्यतरस्याम्।** पादः–पञ्चम्यन्तम्। अन्यतरस्याम्–अव्ययपदम्।

**टाबृचि।** टाप्–प्रथमान्तम्। ऋचि–सप्तम्यन्तम्।

**मनः।** मनः–पञ्चम्यन्तम्।

**अनो बहुव्रीहेः।** अनः–पञ्चम्यन्तम्। बहुव्रीहेः–पञ्चम्यन्तम्।

**डाबुभाभ्यामन्यतरस्याम्।** डाप्–प्रथमान्तम्। उभाभ्याम्–पञ्चम्यन्तम्। अन्यतरस्याम्–अव्ययपदम्।

**अन उपधालोपिनः।** अनः–पञ्चम्यन्तम्। उपधालोपिनः–पञ्चम्यन्तम्। अन्यतरस्याम्–अव्ययपदम्।

**प्रत्ययस्थात्।** प्रत्ययस्थात्–पञ्चम्यन्तम्। कात्–पञ्चम्यन्तम्। पूर्वस्य–पष्ठयन्तम्। अतः–पञ्चम्यन्तम्। इत्–प्रथमान्तम्। आपि–सप्तम्यन्तम्। असुपः–पञ्चम्यन्तम्।

**न यासयोः।** न–अव्ययपदम्। यासयोः–पष्ठयन्तम्।

**उदीचामातः।** उदीचाम्–पष्ठयन्तम्–

**संहितशफलक्षणवामादेश्च।** संहितशफललक्षणवामादेः–पञ्चम्यन्तम्। च–अव्यय०।

**संज्ञायाम्**–सप्तम्यन्तम्।

**शार्ङ्गरवाद्यञो ङीन्।** शार्ङ्गरवाद्यञः–पञ्चम्यन्तम्। ङीन्–प्रथमान्तम्

**यङश्चाप्।** यङः–पञ्चम्यन्तम्। चाप्–प्रथमान्तम्।

**आवट्याच्च।** आवट्यात्–पञ्चम्यन्तम्। च–अव्ययपदम्।

**तद्धिताः।** तद्धिताः–प्रथमान्तम्।

**यूनस्तिः।** यूनः–पञ्चम्यन्तम्। तिः–प्रथमान्तम्।

॥ इति स्त्रीप्रत्ययाः ॥

**प्रातिपदिकार्थलिङ्ग।** प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे–सप्तम्यन्तं। प्रथमा–प्रथमान्तम्।

**सम्बोधने च।** सम्बोधने–सप्तम्यन्तं। च–अव्ययपदं।

**कारके।** कारके–सप्तम्यन्तम्।

**कर्तुरीप्सिततमं कर्म।** कर्तुः–षष्ठ्यन्तं। ईप्सिततमं–प्रथमान्तं। कर्म–प्रथमान्तं।

**अनभिहिते।** सप्तम्यन्तम्।

**कर्मणि द्वितीया।** कर्मणि–सप्तम्यन्तं। द्वितीया–प्रथमान्तम्।

**तथा युक्तं च।** तथा–अव्ययपदं। युक्तं–प्रथमान्तं। च–अव्ययपदम्। अनीप्सितं–प्रथमान्तम्।

**अकथितञ्च।** अकथितं–प्रथमान्तम्। च–अव्ययपदं।

**गतिबुद्धि।** गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणाम्–षष्ठ्यन्तम्। अणिकर्ता–प्रथमान्तं। सः–प्रथमान्तं। णौ–सप्तम्यन्तम्।

**हृक्रोरन्यतरस्याम्।** हृक्रोः–षष्ठ्यन्तम्। अन्यतरस्याम्–अव्ययपदम्।

**अधिशीङ्स्थासाम्।** अधिशीङ्स्थासाम्–षष्ठ्यन्तं। कर्म–प्रथमान्तम्।

**अभिनिविशश्च।** अभिनिविशः–षष्ठ्यन्तं। अभिनीति–लुप्तपञ्चम्यन्तं वा। च–अव्ययपदम्।

**उपान्वध्याङ्वसः।** उपान्वध्याङ्वसः–षष्ठ्यन्तम्। [उपान्वध्याङ्–लुप्तपञ्चम्यन्तं। वशः–षष्ठ्यन्तमिति वा]।

**अन्तरान्तरेणयुक्ते।** अन्तरान्तरेणयुक्ते–सप्तम्यन्तम्।

**कर्मप्रवचनीयाः।** कर्मप्रवचनीयाः–प्रथमान्तम्।

**अनुर्लक्षणे।** अनुः–प्रथमान्तं। लक्षणे–सप्तम्यन्तम्।

**कर्मप्रवचनीययुक्ते।** कर्मप्रवचनीययुक्ते–सप्तम्यन्तम्। द्वितीया–प्रथमान्तम्।

**तृतीयार्थे।** तृतीयार्थे–सप्तम्यन्तम्।

**हीने।** हीने–सप्तम्यन्तम्।

**उपोऽधिके च।** उपः–प्रथमान्तम्। अधिके–सप्तम्यन्तं। च–अव्ययपदम्।

**लक्षणेत्थम्।** लक्षणेत्थंभूताख्यानभागवीप्सासु–सप्तम्यन्तम्। प्रतिपर्यनवः–प्रथमान्तम्।

**अभिरभागे।** अभिः–प्रथमान्तम्। अभागे–सप्तम्यन्तम्।

**अधिपरी अनर्थकौ।** अधिपरी–प्रथमान्तम्। अनर्थकौ–प्रथमान्तम्।

**सुः पूजायाम्।** सुः–प्रथमान्तम्। पूजायाम्–सप्तम्यन्तम्।

**अतिरतिक्रमणे च।** अतिः–प्रथमान्तम्। अतिक्रमणे–सप्तम्यन्तम्। च–अव्ययपदम्।

**अपिः पदार्थ।** अपिः–प्रथमान्तम्। पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु–सप्तम्यन्तम्

फलेभ्यो याति-फलों के लिए जाता है।

नमस्कुर्मो नृसिंहाय-नृसिंह को प्रसन्न करने के लिए नमस्कार करता है।

स्वयम्भुवे नमस्कृत्य-ब्रह्मा को नमस्कार करके।

यागाय याति, यज्ञ करने को जाता है।

हरये नमः—हरि को नमस्कार।

प्रजाभ्यः स्वस्ति-प्रजाके लिए कल्याण।

अग्नयेस्वाहा-अग्नि के लिए।

पितृभ्यः स्वधा-पितरों के लिए।

दैत्येभ्यो हरिरलं प्रभुः—दैत्यों के लिए हरि काफी हैं। प्रभु हैं।

समर्थः, शक्तः-हरि समर्थ हैं, प्रभु है।

वषडिन्द्राय-इन्द्र के लिए हवि।

स्वस्ति गोभ्यो भूयात्-गौओं का कल्याण हो।

न त्वां तृणं मन्ये तृणाय वा-में तुमको तृण भी नहीं समझता।

न त्वां शुने मन्ये-मैं तुमको कुत्ता भी नही मानता।

ग्रामं-ग्रामाय-वा गच्छति-गांव को जाता है।

मनसा हरिं व्रजति-मन से हरि को प्राप्त होता है।

पन्थानं गच्छति-मार्ग को जाता है।

उत्पथेन पथे गच्छति-उत्पथ से ('उजट रास्ते से') मार्ग पर जाता है।

ग्रामादायाति-गांव से आता है।

धावतोऽश्वात्पतति-दौड़ते हुए घोड़े से गिरता है।

वृक्षस्य पर्णं पतति-वृक्ष का पत्ता गिरता है

पापाज्जुगुप्सते—पाप की निन्दा करता है। विरमति-पापसे हटता है।

धर्मात्प्रमाद्यति-धर्म से चूकता है।

चोराद्बिभेति-चोर से डरता है।

चोरात्त्रायते-चोर से रक्षा करता है।

अरण्ये बिभेति-वन में डरता है।

त्रायते वा-वन में रक्षा करता है।

अध्ययनात्पराजयते-पढ़ने से पराजित होता है। उद्विग्न होता है।

शत्रून्पराजयते-शत्रुओंको परास्त करता है।

यवेभ्यो गां वारयति-यवों से गौ को हटाता है।

यवेभ्यो गां वारयति क्षेत्रे-खेत में यवों से गौ को हटाता है।

मातुर्निलीयते कृष्णः-कृष्ण माता से छिपता है।

चोरान्न दिदृक्षते-चोरों को देखना नहीं चाहता।

उपाध्यायादधीते-गुरु से पढ़ता है।

नटस्य गाथां श्रृणोति-नट की कथा (कहानी) सुनता है।

ब्रह्मणः प्रजाः प्रजायन्ते-ब्रह्मा से प्रजा जन्मती है।

हिमवतो गङ्गा प्रभवति-हिमालय से गङ्गा निकलती है।

प्रासादात्प्रेक्षते-महल पर चढ़ कर देखता है।

आसनात्प्रेक्षते-आसन पर बैठ कर देखता है।

श्वशुराज्जिह्रेति-श्वशुर को देख लज्जित होती है।

कस्मात्त्वं-तुम कहाँ से आ रहे हो?।

नद्याः-नदी से आ रहा हूँ।

वनाद्ग्रामो योजनं-योजने वा-वन से गाँव १ योजन (४ कोश) पर है।

कार्तिक्या आग्रहायणी मासे-कार्त्तिक

की पूर्णिमा से अगहन (मंगसिर) की पूर्णिमा १ महीने पर आती है।

अन्यो भिन्न-इतरो वा कृष्णात्-कृष्ण से अन्य।

आराद्वनात्-वन के पास या दूर।

ऋते कृष्णात्-कृष्ण के विना।

पूर्वो ग्रामात्-गाँव से पूर्व।

चैत्रात्पूर्वः फाल्गुनः-चैत से फाल्गुन पहिले है।

पूर्वं कायस्य-शरीर का पूर्व भाग।

प्राक् प्रत्यग्वा ग्रामात्-गाँव से पूर्व या पश्चिम।

दक्षिणा ग्रामात्-गाँव से दक्षिण में।

दक्षिणाहि ग्रामात्-गाँव से दक्षिण में थोड़ी दूर पर।

भवात्प्रभृति-आरभ्यवासेव्यो हरिः-शिवजी तक हरि सेव्य है।

ग्रामाद्बहिः-गाँव से बाहर।

अपहरेः-परिहरेः संसारः-हरि को छोड़ कर संसार है।

हरिं परि-हरि की ओर।

आमुक्तेः संसारः-मुक्ति तक संसार है।

आसकलाद्ब्रह्म-सम्पूर्ण जगत् ब्रह्मरूप है

प्रद्युम्नः कृष्णात्प्रति-प्रद्युम्न (कृष्णकापुत्र) कृष्ण का प्रतिनिधि है।

तिलेभ्यः प्रतियच्छति मापान्-तिलों के बदले उड़द देता है।

शताद्बद्धः-सौ के लिए वान्धा गया।

शतेन बन्धितः-सौ रुपया ऋण के लिए पकड़ा गया।

जाड्यात्-जाड्येन वा बद्धः-मूर्खता से पकड़ा गया है।

धनेन कुलम्-धन से कुल।

बुद्ध्या मुक्तः-बुद्धि से छूटा।

धूमादग्निमान्-धूम से ज्ञात होता है कि यह पर्वत अग्निमान् है।

नास्ति घटोऽनुपलब्धेः-घट नहीं है, क्यों कि मिलता नहीं है।

पृथक् रामेण-रामात्-रामं वा-राम से अलग।

स्तोकेन-स्तोकाद्वा मुक्तः-थोड़े से छूटा।

स्तोकेन विषेण हतः-थोड़े से जहर से मरा।

ग्रामस्य दूरं-दूरात्-दूरेण वा-गाँव से दूर।

अन्तिकम्—अन्तिकात् -अन्तिकेन वा-गाँव के पास।

दूरः पन्थाः-दूर रास्ता।

राज्ञः पुरुषः-राजा का सिपाही।

सतां गतम्-सज्जनो का गमन।

सर्पिषो जानीते-घृतसम्बन्धी प्रवृत्ति।

मातुः स्मरति,-माताका स्मरण करता है।

एधो दकस्योपस्कुरुते-काष्ठ जल में गुणान्तर पैदा करता है।

भजे शम्भोश्चरणयोः-शम्भु के चरणों को भजता हूँ।

फलानां तृप्तः-फलों से तृप्त।

अन्नस्य हेतोर्वसति-अन्नके लिए वसता है।

केन हेतुना वसति कस्य हेतोर्वसति किस कारण रहता है।

ज्ञानेन निमित्तेन हरिः सेव्यः-ज्ञान के लिए हरि सेव्य है।

ग्रामस्य दक्षिणतः-ग्राम के दक्षिण।

पुरः पुरस्तात्-ग्राम के आगे।

उपरि-उपरिष्टात्-ग्राम के ऊपर।

दक्षिणेन ग्रामं-ग्रामस्य वा-गाँव से थोड़ा दक्षिण।

दूरं निकटं ग्रामस्य-ग्रामाद्वा-ग्राम से दूर या पास।

सर्पिषो ज्ञानम्-घृत का ज्ञान।

मातुः स्मरणम्-माता का स्मरण।

सर्पिषो दयनम्-ईशनं वा-घीका रक्षण या प्रभुत्व।

एधो दकस्योपस्करणम्-लकड़ी का जल में गुणाधान।

चौरस्य रोगस्य रुजा-रोग कृत चौर की पीड़ा।

रोगस्य चौरज्वरः-चौरसंतापो वा—क्षयादि रोग कृत चौर सम्बन्धी ज्वर या सन्ताप।

सर्पिषो नाथनम्-'मेरे पास घीहो' ऐसी इच्छा करना।

माणवकनाथनम्-माणवक सम्बन्धी याच्ना।

चौरस्योज्जासनम्-चौर का मारना।

चौरस्य निप्रहणनं प्रणिहननं,निहननं प्रहणनं वा चौरस्यक्राथनम्-चौरका मारना।

वृषलस्य पेषणम्-वृषल का पीसना।

धानापेषणम्-धाणी का पीसना।

शतस्य व्यवहरणं-पणनं वा-सौ रुपए का क्रय विक्रय या बाजी लगाना।

शलाकाव्यवहारः-शलाका की (सलाई) गणना।

ब्राह्मणपणनं-ब्राह्मण की स्तुति।

शतस्य दीव्यति-सौ रुपयों से व्यापार करता है, या जूआ खेलता है।

ब्राह्मणं दीव्यति-ब्राह्मण की स्तुति करता है।

शतस्य शतं वा प्रतिदीव्यति-सौ रुपये से व्यापार करता है या जुवा खेलता है।

अग्नयेच्छागस्य हविषोवपाया मेधसः प्रेष्य अनुब्रूहि वा-अग्नि को छाग हवि चर्बी मेद दो।

पञ्चकृत्वोऽह्नो भोजनम्-दिन में पाँच वार भोजन।

द्विरह्नो भोजनम्-दिन में दो वार भोजन।

द्विरह्न्यध्ययनम्-दिनमें दोवार पढ़ना।

कृष्णस्य कृतिः-कृष्ण की कृति।

जगतः कर्ता कृष्णः-जगत् का कर्ता कृष्ण।

नेताऽश्वस्य स्रुघ्नं-स्रुघ्नस्य वा-अश्व को स्रुघ्न ले जाने वाला।

कृतपूर्वी कटम्-जिसने पहिले चटाई बनाई हो।

आश्चर्यो गवां दोहोऽगोपेन-बिना गोप के गौ का दूहना आश्चर्य है।

भेदिका-बिभित्सा वा रुद्रस्य जगतः-रुद्र की जगत् को नष्ट करने की इच्छा।

विचित्रा जगतः कृतिर्हरेर्हरिणा वा-हरिकी जगत् रूपी कृति विचित्र है।

शब्दानामनुशासनमाचार्येणाचार्यस्य वा-आश्चर्यकर्तृक शब्दों का अनुशासन।

राज्ञां मतो बुद्धः पूजितो वा-राजाओं का अभिमत, जाना हुआ या पूजित।

इदमेषामासितं-शयितं-गतं-भुक्तंवा यह इनका बैठने सोने जाने बखाने का स्थान है। कुर्वन् कुर्वाणोवासृष्टिं हरिः। हरि सृष्टि को करता हुआ।

हरिंदिदृक्षुः-हरि को देखने को इच्छुक। अलङ्करिष्णुर्वा-अलङ्कृत करने वाला। दैत्यान्घातुको हरिः। दैत्यों को मारने वाले हरि। लक्ष्म्याः कामुकोहरिः-लक्ष्मी के कामुक हरि। जगत्सृष्ट्वा,-जगत् उत्पन्न करके। सुखंकर्तुम्-सुख करने के लिए।

विष्णुना हता दैत्याः दैत्यान्हतवान्विष्णुः-विष्णु ने दैत्यों को मारा।

ईषत्करः प्रपञ्चो हरिणा–हरि के लिए जगत् का प्रपञ्च–रचना सामान्य बात है।

सोमं पवमानः–सोमको पवित्र करने वाला।

आत्मानंमण्डयमानः–अपना श्रृङ्गार करने वाला।

वेदमधीयन्–वेद को पढ़ता हुआ।

कर्त्ता लोकान्–संसार का करने वाला।

मुरस्य–मुरंवाद्विषन्–मुर का दैत्य शत्रु (मुरारि)।

ब्राह्मणस्य कुर्वन्,–ब्राह्मण का नौकर।

नरकस्य जिष्णुः–नरकासुर का जीतने वाला।

सतः पालकोऽवतरति–सज्जनों का रक्षा करने वाला जन्मता है।

व्रजं गामी–व्रज को जरूर जाने वाला।

शतंदायी–सौ का अवश्य देनेवाला।

मया मम वा सेव्यो हरिः–मेरे से हरि सेव्य है।

गेयो माणवकः साम्नाम्–साम का गान करने वाला।

नेतव्या व्रजं गावः कृष्णेन–कृष्ण द्वारा गौ व्रज ले जाने लायक हैं।

तुल्यः-सदृशः समो वा कृष्णस्य–कृष्णेन वा–कृष्ण की तुल्य।

तुला–उपमा वा कृष्णस्य नास्ति–कृष्ण की उपमा नहीं है।

आयुष्यं चिरजीवितं कृष्णाय कृष्णस्य वा भूयात्–कृष्ण चिरजीवी हो।

मद्रं-भद्रं-कुशलं-निरामयम्-सुखं-शं-अर्थः प्रयोजनं-हितं,पथ्यं वा भूयात्–कृष्ण का कल्याण हो।

देवदत्तस्यायुष्यमस्ति—देवदत्त की आयु है।

कटे आस्ते,–चटाई पर बैठा है।

स्थाल्यां पचति–बटलोही में पकाता है।

मोक्षे इच्छास्ति–मोक्ष में इच्छा है।

सर्वस्मिन्नात्मास्ति–सबमें आत्मा है।

वनस्य दूरेऽन्तिकेवा–वन के दूर या निकट।

अधीती व्याकरणे–व्याकरण पढ़ा हुआ।

साधुः कृष्णो मातरि–कृष्ण माताके अनुकूल है।

असाधुर्मातुले–कृष्ण मामा कंस के वैरी हैं

चर्मणि द्वीपिनं हन्ति–चर्म के लिए चीते को मारता है।

वेतनेन धान्यं लुनाति–मजूरी लेकर धान काटता है।

गोषु दुह्यमानासु गतः–जब गौ दूही जा रही थीं तब गया।

सत्सु तरत्सु असन्त आसते–सज्जन पार उतर रहे थे उस समय पापी बैठे ही रह गए।

असत्सु तिष्ठत्सु सन्तस्तरन्ति–पापी बैठे हैं, सज्जन पार उतर रहे हैं।

सत्सु तिष्ठत्सु असन्तस्तरन्ति–सज्जन बैठे हैं पापी पार उतर रहे हैं।

असत्सु तरत्सु सन्तस्तिष्ठन्ति–असत् लोग पार उतर रहे हैं सज्जन बैठे हैं।

रुदति रुदतो वा प्राव्राजीत्–रोते हुओं को छोड़ के संन्यासी हो गया।

गवां गोषुवास्वामी–गौवों का स्वामी।

गवां गोषु वा प्रसूतः–गौवों का अनुभव लेने को उत्पन्न हुआ है।

आयुक्तः कुशलो वा हरिपूजने-हरिपूजनस्य वा–हरि पूजन में लगाया हुआ या कुशल।

आयुक्तो गौः शकटे—सगड़ में थोड़ा सा जुडा हुआ बैल।

नृणां-नृपु-वा ब्राह्मणः श्रेष्ठः—मनुष्यों में ब्राह्मण श्रेष्ठ है।

गवां-गोपु वा कृष्णा बहुक्षीरा—गौवों में कालीं गौ ज्यादा दूध देती है।

गच्छतां गच्छत्सु वा धावञ्छीघ्रः—चलने वालों में दौड़नेवाला शीघ्र गामी होता है।

छात्राणां छात्रेपु वा मैत्रः पटुः—छात्रों में मैत्र ( नामक ) कुशल है।

माथुराः पाटलिपुत्रकेभ्यः आढयतराः—मथुरा निवासी पटनेवालों से ज्यादा धनी हैं।

मातरि साधुर्निपुणो वा—माता का भक्त व आज्ञाकारी है।

निपुणो राज्ञो भृत्यः—राजा का नौकर चतुर है।

साधुर्निपुणो वा मातरं प्रतिपर्यनुवा—माता के प्रति साधु हैं।

प्रसित-उत्सुको वा हरिणा हरौ वा—हरि में तत्पर है।

मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्

मूले—श्रवणे वा—मूल नक्षत्र में सरस्वती का आवाहन करे, श्रवण में विसर्जित करे।

पुष्ये शनिः—पुष्य नक्षत्र मे शनि है।

अद्य भुक्त्वायंद्व्यहे द्व्यहाद्वा भोक्ता—आज भोजनकर यह दो दिन पर खायगा।

इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यंविध्येत्—यहाँ से कोशभरपर लक्ष्य का वेधन करता है।

लोके-लोकाद्वाऽधिको हरिः—लोक में हरि सबसे बड़े हैं।

उपपरार्द्धे हरेर्गुणाः—हरि के गुण परार्ध से अधिक हैं।

अधिभुवि रामः—अधिरामे भूः—रामजी पृथ्वी के स्वामी है।

रामाधीना—राम के अधीन।

यदत्र मामधिकरिष्यति—जो मुझे अधिकार देगा।

इति कारकप्रक्रियाप्रयोगाः।

इति उदाहरणार्थकौमुदी।

# अथ गणकौमुद्यां—

## सोदाहरणा उपसर्गार्थवृत्तिः

### अथ प्रादिगणः । प्र परा अप सम् अनु

कृष्णाचार्यैं रामचन्द्राचार्यभ्रातृसुतैः कृताः ।
सोदाहृत्युपसर्गार्थश्लोका ये ताँल्लिखाम्यहम् ॥ १ ॥
'प्र' आदिकर्मदीर्घेशे भृशसंभवतृप्तिषु ।
वियोगशुद्धिशक्तीच्छाशान्तिपूजाऽग्रदर्शने ॥ २ ॥

आदिकर्मणि क्तः । प्रयातः । दीर्घे–प्रवला मूषकाः । ईशे–प्रभुर्देशस्य । भृशार्थे–प्रवदन्ति दायादाः । संभवे–हिमवतो गङ्गा प्रभवति । तृप्तौ–प्रभुक्तमन्नम् । वियोगे–प्रोषितः। शुद्धौ–प्रसन्नमुदकम् । शक्तौ–प्रशक्तो विप्राय । इच्छायाम्–प्रार्थयते कन्याम् । शान्तौ–प्रशान्तोऽग्निः । पूजायाम्–प्राञ्जलिः स्थितः । अग्रे–प्रवालम् । दर्शने–प्रलोकयति ।

वधे गतौ दर्शने च विक्रमाभिमुखे भृशे ।
अधीनमोक्षणप्रातिलोम्यकेषु 'परा' मतः ॥ ३ ॥

वधे–पराहतः । गतौ–परागतः । दर्शने–परादृष्टः । विक्रमे–पराक्रान्तः । अभिमुखे–परावृत्तः । भृशे—पराजितः । अधीने—पराधीनः । मोक्षणे—पराकृतः । प्रातिलोम्ये–पराङ्मुखः ।

'अपो' वियोगे विकृतौ विपरीते निदर्शने ।
आनन्दे वर्जने चौर्ये वारणे सम्यगीरितः ॥ ४ ॥

अपयाति । अपकृतवान् । अपशब्दः । अपदिशति । अपहसति । अपत्रिगर्त्ताद्वृष्टो देवः । अपहरति । अपसरति ।

संयोग ऐक्यप्रभवसत्यप्रत्यक्षसिद्धिषु ।
भूषाश्लेषस्वीकरणक्रोधाभिमुखवाचि 'सम्' ॥ ५ ॥

संगतः पुत्रेण । संवदन्ति सख्यः । संभवत्यग्निः । गोष्ठे गां संजानामि । संपश्यते । संसिद्धिः । संस्कृता कन्या । संधत्ते । संगृह्णाति । संक्रुद्धः । संयाति ।

वेदाधिष्ठानसामीप्यपश्चाद्भावानुबन्धने ।
साम्याभिमुखहीनेषु विसर्गे लक्षणे त्वनु ॥ ६ ॥

अनुवाकमधीते । अनुष्ठानं देशे । अनुमेघं वर्षति । अनुरथम् । अनुशयः । अनुकृतिः। अनु वत्सो मातरं धावति । अन्वर्जुनं योद्धारः। अनुज्ञातः।अनुधनमसतां गतिः ।

## अव निस् निर् दुस् दुर् वि आङ् नि

ज्ञानावलम्बशुद्धीषदर्थे व्याप्तिपराभवे ।
अवो ज्ञेयो वियोगे च लोकयोगानुसारतः ॥ ७ ॥

अवगतोऽर्थः । अवलम्ब्य यष्टिं गच्छति । अवदातम् । अवलम्बते । अवकीर्णम् । अवघ्नन्ति । अवयातः ।

'नि'र्वियोगात्ययाऽदेशातिक्रमे लाभनिश्चिते ।

निःसङ्गो ब्रवीति । निर्मेघम् । निर्दिष्टम् । निष्क्रान्तः । निर्वेशः । निश्चितम् ।

दुरीषदर्थे कृच्छ्रेऽर्थे कृशाऽसंपत्तिसंकटे ॥ ८ ॥

दुर्गतः । दुर्जीवनः । दुर्वलः । दुर्गतः । दुर्दिनम् ।

नानावियोगातिशयभृशमोहेशवाङ्मृधे ।
पैशून्याऽस्मरणे भूषेषदर्थनाभिमुख्यके ॥ ९ ॥
अनवस्थामुख्यशौर्यदर्शने विरुदाहृतः ।

विचित्रा सूत्रस्य कृतिः । वियुक्तः । विकीर्णः । वितटा नद्यः । विमनस्कः । विभुः । विवदन्ति । विगायति । विस्मृतः । विभूषितः । विलोपितः । विमुखः । विभ्रान्तः । विशिष्टः । विक्रान्तः । विलोकयति ।

आङिच्छाभयवाक्येषदर्थाश्लेषादिकर्मणि ॥ १० ॥
बन्धनेऽभिविधौ शाठ्यकृच्छ्रसामीप्यसंश्रये ।
अभिमन्त्रनिवृत्त्याशादानानुभवविस्मये ॥ ११ ॥
प्रतिष्ठादेशमर्यादास्पर्द्धामुख्योर्ध्वकर्मणि ।

आकाङ्क्षते । आविग्नः । आजानाति । आताम्रा नखाः । आलिङ्गति । आरभते । कवचमावध्नन्ति । आकुमारं यशः । आचरति कपटेन । आधिः । आसन्ना वयम् । आवसथः । आमन्त्रणम् । आधावति । आशास्ते । आदत्ते । आ शीतम् । आ एवं किल तत् । आस्पदम् । आदिष्टः । आ भक्तेर्दुःखम् । आह्वयन्ते रथिनो रथिनः । आगच्छति । आरोहति पर्वते ।

राश्यधस्त्वभृशादेशनित्यकौशलबन्धने ॥ १२ ॥
अन्तर्भावे समीपे निर्दर्शने परमाश्रये ।

निकरो मणीनाम् । निपतितम् । निगृहीतः । निदेशितम् । निविशते । निपुणः ।

## अधि अपि अति सु उत् अभि प्रति परि

निबद्धः । निपीतमुदकं सिकताभिः । निकृष्टः । निदर्शनम् । निवृत्तः पापात् । निलयः ।

**अधिरध्ययनैश्वर्यवशित्वस्मरणाधिके ॥ १३ ॥**

उपाध्यायादधीते । अधिपतिः । अधीनः । मातुरध्येति । अधिकृतम् ।

**अपि संभवगर्हाशीर्मृतिभूषासमुच्चये ।**

अपि योजनमस्ति । अपि पापिन् । भद्रमपि । मरणमपि । अपिनह्यति हारम् । तदपि ।

**विक्रमातिक्रमे वृद्धौ भृशार्थातिशये त्वतिः ॥ १४ ॥**

अतिरथः । अतिक्रामति । अतिगहनम् । अतितप्तम् । अतिमनुते ज्ञानम् ।

**प्रशंसाऽनुमते पूजाभृशकृच्छ्रशुभेषु 'सुः' ।**

सुरूपः । सुकृतम् । सुसाधुः । सुतप्तः । सुदुष्करम् । सुगन्धः ।

**'उत्' प्राबल्यवियोगोर्ध्वकर्मलाभप्रकाशने ॥ १५ ॥**
**आश्चर्यमोक्षणे भावे बलप्राधान्यशक्तिषु ।**

उद्बलः । उद्गच्छति । उत्तिष्ठति शयनात् । उत्पन्नम् । उच्चरति ।
उत्सुकः । उद्गतोऽश्वः । उत्पथः । उत्कः । उद्दिष्टः । उत्साहः ।

**अभिः पूजाभृशार्थेच्छाव्याधिसाम्याभिमुख्यके ॥ १६ ॥**
**सौरूपाऽवचनाऽऽहारस्वाध्यायेषु निरूपितः ।**

अभिवदति गुरुम् । अभियुक्तः । अभिलिप्सते । अभिस्यन्दो व्याधिः । अभिजातः ।
अभिमुखम् । अभिरूपः । अभिधानम् । अभ्यवहरति । अभ्यस्यति ।

**सादृश्याऽऽदानहिंसाङ्गीकृतौ प्रतिनिधौ क्वचित् ॥ १७ ॥**
**व्याध्यभिमुख्ययोर्व्याप्तौ वारणे 'प्रति'रुच्यते ।**

प्रति देवदत्तस्य । प्रतिगृह्णाति । प्रतिहन्ति । प्रतिज्ञानम् । अभिमन्युरर्जुनतः प्रति ।
प्रतिश्यायम् । प्रतिसूर्यं गच्छति । प्रतिकीर्णं पांशुभिः । प्रतिषिद्धः ।

**'परिः' समन्ततो भावव्याप्तिदोषकथासु च ॥ १८ ॥**
**भूषाऽऽश्लेषे पूजने च वर्जने वसने शुभे ।**

परिभ्रमति । परिगतोऽग्निर्ग्रामम् । परिवादः । परिकरोति कन्याम् । परिष्वजते ।
परिचरति गुरुम् । परि त्रिगर्तेभ्यो वृष्टो देवः । परिधत्ते वासः । परिदेवनम् ।

उप पते प्रादयः।

---

# अथ अव्ययार्थनिरूपणम्।

स्वर्। अन्तर्। प्रातर्। पुनर्। सनुतर्। उच्चैस्। नीचैस्। शनैस्। ऋधक्। ऋते। युगपत्। आरात्। पृथक्। ह्यस्। श्वस्।

---

उपः सामीप्यसामर्थ्यव्याप्त्याचार्यकृतौ मृतौ ॥ १९ ॥
दोषाऽऽदानक्रियावीप्सारम्भाऽध्ययनपूजने ।

उपकुम्भं तिष्ठति। उपकरोति मित्रेभ्यः। उपकीर्णः पांशुभिः। उपदिशति शिष्येभ्यः। उपरतः। उपघातः। उपहरत्यर्थं देवदत्ताय। उपचारः। देवं देवमुपचरति। उपक्रमते भोक्तुम्। उपाध्यायादधीते। उपचितः पिता पुत्रेण।

कृष्णाचार्यैः कृताः श्लोका उपसर्गार्थसंग्रहे ॥ २० ॥

॥ * ॥ समाप्ता सोदाहरणा उपसर्गवृत्तिः ॥ * ॥

---

## ❀ अथ अव्ययार्थनिरूपणम् ❀

स्वर् अन्तर् एतावन्तोदात्तौ निपात्येते। स्वरिति स्वर्गपरलोकयोः। स्वर्गे—'छायेव या स्वर्जलधेर्जलेषु'। परलोके—'स्वर्यातस्य ह्यपुत्रस्य' इति। अन्तरिति मध्ये। 'अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ'। प्रातर् पुनर् आद्युदात्तौ। प्रातरिति प्रत्यूषे। 'प्रातःसंध्यामुपासीत'। श्वस्तनेपि। पुनरित्यप्रथमविशेषयोः। अप्रथमे—पुनरुक्तम्। विशेषे—'किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा'। सनुतर्प्रभृतयो नवान्तोदात्ताः। सनुतरित्यन्तर्धाने। 'सनुतश्चौरो गच्छति'। उच्चैरिति महति। उच्चैरुच्चैर्ऋतुश्चिरम्'। नीचैरित्यल्पे। 'नीचैर्मरुद्वाति'। शनैरिति क्रियामान्द्ये। 'शनैः शनैर्ददात्येष पादौ भूतानुकम्पया'। ऋधगिति सत्ये। 'ऋधग्वदन्ति विद्वांसः'। वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये। ऋते इति वर्जने। 'ऋते कृशानोर्न हि मन्त्रपूतम्'। युगपदित्येककालम्। 'युगपत् प्राप्ताः'। आराद् दूरसमीपयोः। दूरे—'आरात् शत्रोः सदा वसेत्'। समीपे—'प्रतीतान् स्थापयेदारात्'। पृथगिति वर्जने। 'त्वत्तः पृथक् नास्ति बन्धुः'। ह्यस्प्रभृतयोपि साम्यन्ता द्वाविंशतिरन्तोदात्ता इति। अतीतेऽह्नि ह्यः। ह्योऽकरोत्। श्वोऽनागतेऽह्नि। 'श्वो गन्ता'। दिवेति अह्नि।

दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । ( अधस् ) समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । ✻ वत्प्रत्ययान्तं च ✻ । ब्राह्मणवत् । क्षत्रियवत् । सना । उपधा । सनात् । सनदिति केचित् । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् ।

---

'दिवातनम्' । रात्राविति निशायाम् । 'रात्रौ वृत्तं तु द्रक्ष्यसि' । रात्रौचरः । सायमिति निशामुखे । 'सायमासीनः संध्यां वन्दते' । चिरमिति चिरकाले । चिरंजीवी । मनागिति ईषदर्थे । 'मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी' । 'ईषदित्यल्पे । 'ईषद्गौरः' । जोषमिति सुखमौनयोः । 'जोषमास्ते जितेन्द्रियः' । जोषमास्स्व । तूर्ष्णामिति मौने । 'मुनिस्तूष्णीमुपास्ते' । बहिस बाह्ये । बहिर्भूतः । अवस् इति वहिर्भूते । अवो गच्छति । समयेत्यन्तिकमध्ययोः । त्वां समयाऽऽस्ते । समोप इत्यर्थः । ग्रामं समयाऽऽस्ते । मध्ये इत्यर्थः । निकषेत्यन्तिके । 'विलङ्घ्य लङ्कां निकषा हनिष्यति' । स्वयमित्यात्मनेत्यर्थे । स्वयंकृतम् । वृथेति वृथार्थे । 'वृथा दुग्धोऽनड्वान्' । नक्तमिति रात्रौ । 'इदं नक्तन्तनं दाम' ।

नञिति निषेधेषदर्थाऽवक्षेपेषु । 'अब्राह्मणः' । 'अनुदरा कन्या' । 'अपचसि त्वं जाल्म' । तदन्यतद्विरुद्धतदभावेष्वपि नञो वृत्तिमिच्छन्ति । अश्वादन्योऽनश्वः । धर्मविरुद्धोऽधर्मः । पापाभावोऽपापम् । ञकारो नलोपो नञ इति विशेषणार्थः । हेतौ इति निमित्तार्थे । हेतौ हृष्यति । इद्धेति प्राकाश्ये । 'समिद्धमिद्धेशमहो ददासि' । अद्धेति स्फुटावधारणे । 'आराधितोऽद्धा मनुरप्सरोभिः' । तत्त्वातिशययोरित्येके । सामीत्येतदर्धजुगुप्सितयोः । अर्धे—'सामिसंमीलिताक्षी' । जुगुप्सिते—'सामिकृतमकृतं स्यात्' । वदिति । तेन तुल्यं क्रिया चेद्वतिः' इत्यादिना विहितो यो वतिस्तदन्तं च स्वरादौ ज्ञेयम् । सनेत्यादयश्चत्वारस्तिरसन्ता आद्युदात्ताः । सनेति नित्ये । 'सनातनः पितरमुपागमत् स्वयम्' । उपधेति भेदे । सनेति नित्ये । सनदिति केचित् पठन्ति । तन्नित्ये । सनत्कुमारः । सनादिति नित्ये । सनात्कुमारः । तिरस् इत्यन्तर्धौ तिर्यगर्थेच । तिरोहितः । तिरः काष्ठं कुरु । परिभूतेऽन्तर्ध्युपचारात् । तिरस्कृतोऽरिः । अन्तरेत्यन्तोदात्तो मध्यविनार्थयोः । 'त्वां मां चाऽन्तरा कमण्डलुः' । 'त्वामन्तरा तामरसायताक्षि' । अन्तरेणेति वर्जने । 'अन्तरेण पुरुषकारं न किंचित् सिध्यति' । 'ज्योगिति कालभूयस्त्वप्रश्नयोः' । 'ज्योग् जीवामः' । 'ज्योक्कृत्य नृपतिं गतः' । शीघ्रार्थे संप्रत्यर्थेऽपि । कमिति वारिमूर्धनिन्दासुखेषु । वारिणि—कंजं पद्मम् । मूर्ध्नि—कंजाः कचाः । निन्दायाम्—कंदर्पः । सुखे—कम्बुः ।

शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रबाहुकम् । आर्यहलम् । अभीक्ष्णम् ।

शमिति दुःखोपशमे । शंकरः । सहसेत्याकस्मिकाऽविमर्शयोः । 'दिवः प्रसूनं सहसा पपात' । 'सहसा विदधीत न क्रियाम्' । विनेति पृथगर्थे । 'विना वातं विना वर्षम्' । नानेत्यनेकविनार्थयोः । 'नानाविधं देहभृतां समाजम्' । 'नाना नारी निष्फला लोकयात्रा' । स्वस्तीति पुण्याशीःक्षेममङ्गलप्रत्यभिवादेषु । 'स्वस्त्यस्तु ते धार्मिक ! मत्प्रसादात्' । 'स्वस्ति तेऽस्तु लतया सह वृक्ष' । 'स्वस्त्यस्तु ते सौम्य ! चिराय जीव' । 'स्वस्ति श्रीकुसुमपुरात्' । 'राज्ञा नमस्कृता विप्राः स्वस्तीत्येतत्प्रयुञ्जते' । स्वधेति पितृदाने । 'स्वधा पितृभ्यः' । अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु । भूषणे–अलंकारः' । 'अलमस्य धनम्' । वह्नित्यर्थः । 'अलं मल्लो मल्लाय' । शक्त इत्यर्थः । वारणे'–अलमतिप्रसङ्गेन' । निषेधे–'आलप्याऽलमिदं बभ्रोर्यत्स दारानपाहरत्' । न वक्तव्यमेतदित्यर्थः । वषडिति हविर्दाने । 'वषडिन्द्राय' । अन्यदित्यन्यार्थे । 'देवदत्त आयातोऽन्यच्च यज्ञदत्तः' इति । अस्तीति सत्तायाम् । 'अस्तिक्षीरा गौः' । अस्ति परलोके मतिरस्य आस्तिकः । उपांशु इति अप्रकाशोच्चारणरहस्ययोः । 'जपतः सदा जपमुपांशु' । 'कथमुपांशु वधः' । क्षमेति क्षान्तौ । 'भवान् क्षमा करोतु' । विहायसेति वियदर्थे । 'विहायसा रम्यमितो विभाति' । दोषेति रात्रौ । 'दोषामन्यमहः' । मृषेति वितथे । मृषोद्यम् । मिथ्येति वितथे । मिथ्यावादी । मुधेति व्यर्थाऽर्थे । 'मुधा बुधा विमुह्यन्ति' । पुरेति अविरतचिरातीतभविष्यदासत्तिषु । 'उपाध्यायेन स पुराधीयते' । अविरतमपाठीत्यर्थः । चिरातीते–'पुरापि न नवं पुराणम्' । भविष्यदासत्तौ'–गच्छ पुरा देवो वर्षति' । समनन्तरं वर्षिष्यतीत्यर्थः । मिथो इति रहःसहार्थयोः । 'मन्त्रयते मिथो' । विरहाऽन्योन्यार्थयोरपि । मिथस् इति रहोऽन्योन्यार्थयोः । मन्त्रयते मिथः' । 'मिथः प्रहरतः' । प्रायस् इति बाहुल्ये । 'सन्तः प्रायो विवेक्तारः' । मुहुस् इति पुनरर्थे । 'इह मुहुर्मुदितैः कलभैरवः' । प्रबाहुकमिति–समकालार्थे । 'प्रबाहुकं गृह्णीयात्' । ऊर्ध्वार्थेऽपि । प्रबाहिकेति केचित् । आर्यहलमिति बलात्कारे । 'आर्यहलं गृह्णाति' । आर्येति प्रतिबन्धे, हलमिति निषेधविषादयोरिति शाकटायनः । अभीक्ष्णमिति अनारते पुनरर्थे च । 'अभीक्ष्णं वक्ति' । पुनरर्थे

१ 'प्रीतिवधे' । २ 'विवादयोः' इति पा० ।

**साकम्। सार्धम्। नमस्। हिरुक्। धिक्। * तसिलादिस्तद्धित एधाचपर्यन्तः। कृत्वसुच्। सुच्। शस्तसी। आस्थालौ च्व्यर्थाश्च *। एते प्रत्ययाः। अथ। आम्। प्रताम्। प्रशान्। प्रतान्। मा। माङ्।**

**इति स्वरादिगणः।**

---

'अभीक्ष्णमास्फालयतीभकुम्भम्'। साकं सार्धमित्येते सहार्थे। 'पुत्रेण साकं याति'। 'पुत्रेण सार्धं याति'। नमस् इति नतौ। 'नमो देवेभ्यः'। हिरुगिति वर्जने। 'हिरुक् कर्मणां मोक्षः'। कर्माणि वर्जयित्वेत्यर्थः। धिगिति निन्दाभर्त्सनयोः। 'धिगिमां देहभृतामसारताम्'। 'धिक्तार्किकान्'।

तसिलादीत्यादि। 'पञ्चम्यास्तसिल्' इत्यतः प्रभृतिभिः 'एधाच्च' इत्येतत्पर्यन्तैः सूत्रैरुक्तस्तद्धितः स्वरादिगणान्तःपाती ज्ञेय इत्यर्थः। कृत्वसुजिति। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति। सुजिति। द्वित्रिचतुर्भ्यः सुच्'। शस्तसी इति। 'बह्वल्पार्थात् शस्कारकादन्यतरस्याम्' इति शस्। 'प्रतियोगे पञ्चम्यास्तसिः'। आस्थालौ इति। 'इण आसिः' इत्युणादिविहित आस्। 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि'। इति थाल्। च्व्यर्थाश्चेति। 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः'। विभाषा साति कार्त्स्न्ये'। 'देये त्रा च'। एते प्रत्यया इति। ततश्च तदन्ताः शब्दा अव्ययसंज्ञा भवन्तीति भावः। अथेति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। मङ्गले—'अथ परस्मैपदानि'। अनन्तरे 'स्नातोऽथ भुङ्क्ते'। आरम्भे। 'अथ शब्दानुशासनम्'। प्रश्ने—'अथ शक्तोऽसि भोक्तुम्'?। कार्त्स्न्ये—'अथ क्रतून् ब्रूमः'। अधिकारे—'अथ स्नानविधिः'। प्रतिज्ञायां—गौडो भवान् अथेतिब्रूमः। समुच्चये—'भीमोऽथार्जुनः'। अथेत्यस्य स्थाने 'अम्' इति केचित्पठन्ति। स च 'अमु च च्छन्दसि' इत्युक्तः अम्प्रत्ययः। आमित्यङ्गीकारे। 'आम् कुर्मः'। 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति प्रत्ययोपि। 'कास्प्रत्ययादाममन्त्रे लिटि' इत्यपीति केचित्। प्रतामिति ग्लानौ। प्रशानिति समानार्थे। 'प्रशान् देवदत्तो यज्ञदत्तेन'। प्रतानिति विस्तारे। मा इति निषेधे। 'मा भवतु'। 'मा भविष्यति'। माङिति निषेधाशङ्कयोः। 'मा कार्षीत्'। 'अस्य पापं मा भूत्'।

॥ इति स्वरादिगणः॥

---

१ 'अम्' पा०।

## अथ निपातान् ब्रुवन् चादिगणं पठति—

**च । वा । ह । अह । एवम् । नूनम् । शश्वत् । कूवित् । नेत् । चेत् । चण् । कच्चित् । यत्र ।**

अथ निपातान् ब्रुवन् चादिगणं पठति। चेति अन्वाचयसमाहारेतेरतरसमुच्चयविनियोगतुल्ययोगिताऽवधारणहेतुषु । अन्वाचयो मुख्यसिद्ध्या चाऽप्राधान्यनिष्पत्तिः । यथा 'भक्षामट गां चानय'। संहतिः प्राधान्ये समाहारे। पाणी च पादौ च पाणिपादम्। इतरेतरयोगे च-संहत्य प्राधान्ये । प्लक्षश्च न्यग्रोधश्च 'प्लक्षन्यग्रोधौ' । एकत्रानेकप्रत्यये समुच्चये-'गार्ग्यो वात्स्यश्च' । 'पचति च पठति च चैत्रः' । विनियोगे-अहं च त्वं च वृत्रहन् संयुज्याव'। तुल्ययोगितायाम्-'ध्यातश्चोपस्थितश्च' । अवधारणे-'अतीतः पन्थानं तव च महिमा वाङ्मनसयोः' । हेतौ-'ग्रामश्च गन्तव्यः शीतं च' । शीतात् कथं गम्यत इत्यर्थः । पादपूरणेपि-'भीमः पार्थस्तथैव च' । वेति विकल्पाऽनवक्लृप्त्युपमानद्वन्द्वसमुच्चयेषु । विकल्पे-'यवैर्व्रीहिभिर्वा यजेत' । अनवक्लृप्तौ-'कस्य वेह भुजवीर्यशालिनः' । उपमाने-'जातां मन्ये तुहिनमथितां पद्मिनीं वाऽन्यरूपाम्' । द्वन्द्वे-'सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम' । न तृतीयेत्यर्थः । समुच्चये-वायुर्वा दहनो वा । अहेति विनियोगे । 'त्वमह ग्रामं गच्छाऽह महारण्यम्' । आचारातिक्रमेपि-'स्वयमह रथेन याति, उपाध्यायमह पदातिं गमयति' । पूजायामपि-'अह माणवकमध्यापय' । एवमिति प्रकृतपरामर्शप्रकारेवार्थोपदेशनिर्देशनिश्चयाङ्गीकारेषु। प्रकृतपरामर्शे-'एवंवादिनि देवर्षौ' । प्रकारे-एवं कुरु । इवार्थे-अग्निरेवं विप्रः। उपदेशे-एवं पठ । निर्देशे-'एवं तावत्' । निश्चये-'एवमेतत् कः संदेहः' । अङ्गीकारे-एवं कुर्मः' । नूनमिति-तर्केऽर्थनिश्चये च । तर्के-'नूनं शरत्फुल्ला हि काशाः' । अर्थनिश्चये-'नूनं हन्तास्मि रावणम्' ।

शश्वदिति-सार्वकाल्ये । 'शश्वच्चकार' इत्यादि । पौनः पुन्येपि-शश्वद्भक्तिकुशिक्षितः । नित्यसहार्थयोरपि-शाश्वतं वैरम् । शश्वद्भुङ्क्ते' । कूपदिति प्रश्नवितर्कप्रशंसासु । कूपदयं गायति' । कुविदिति भूर्यर्थे । 'कुविदङ्ग यवमन्तः' । प्रशंसादावपि । नेदिति शङ्कायाम् । नेज्जिह्मायन्तो नरकं पतामेति । प्रतिषेधविचारसमुच्चयेष्विति शाकटायनः । चेदिति यद्यर्थे । 'सन्तश्चेदमृतेन किम्' । चणिति चेदर्थे । णकारो 'निपातैर्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्' इति विशेषणार्थः । 'अयं च करिष्यति' । अयं चेत् करिष्यतीत्यर्थः । कच्चिदिति इष्टप्रश्ने । 'कच्चिज्जीवति ते माता कच्चिज्जीवति ते पिता' । यत्रेत्यनवक्लृप्त्यमर्षगर्हाश्चर्येषु । 'नावकल्पयामि न मर्षये गर्हे आश्चर्यं यत्र भवान् वृषलं

नह । हन्त । माकिम् । नकिम् । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । तुम् । तथाहि । खलु । किल । तथा ।

याजयेत्' । अस्य 'तद्धितश्चाऽसर्वविभक्तिः' इत्यव्ययत्वे सिद्धेपि 'नयातैर्यद्यदिहन्त' इत्यादौ विशेषणार्थं निपातसंज्ञा । नहेति प्रत्यारम्भे । 'न ह भोक्ष्यसे, न हाऽध्येष्यसे' । हन्तेति हर्षानुकम्पावाक्यारम्भविषादेषु । हर्षे–हन्त जीविताः स्मः' । अनुकम्पायाम्–'पुत्र हन्त तं धानकाः' । वाक्यारम्भे–'हन्त ते कथयिष्यामि' । विषादे–'हन्त हताः पथिकगेहिन्यः' । दाने निश्चये च–'हन्तकारः' । 'हन्त गच्छामः' । माकिमिति निषेधवर्जनयोः । 'रक्षां मे माकिं कुरु' । नकिमित्यौपम्ये च । 'मेघो नकिं वर्षति सिद्धराजः' । माकिर्नकिरिति रेफान्तावित्येके । माङ् नञ् इत्येते व्याख्याते स्वरादौ । ननु च स्वरादित्वेनैवाऽव्ययत्वे सिद्धे किमर्थमत्र पाठ इति चेदुच्यते । निपाताद्युदात्तत्वादिकार्यार्थं निपातेषु पाठः । एवं चेत् स्वरादिपाठोऽनर्थकः । मैवम् । सत्त्ववचनानामपि अव्ययसंज्ञार्थं सूत्रपाठः । एवं सर्वेषामप्युभयत्र पाठवतां प्रयोजनं ज्ञेयम् । यावत्तावदित्येते साकल्यावधिमानाऽवधारणेषु । साकल्ये–यावत्कार्यं तावत् कुरु । अवधौ–'यावद्गङ्गा तावत्तिष्ठ' । माने 'यावद्दत्तं तावद्भुक्तम्' । अवधारणे–यावदमत्रं ब्राह्मणानामन्त्रयस्व' । त्वै इति विशेषवितर्कयोः । 'अयं त्वै प्रकृष्यते' । 'कस्मै त्वै एषोभिगच्छति' । द्वै इति वितर्के । कस्माद्द्वै एषोऽभिगच्छति' । रै इति दानाऽनादरयोः । 'रै करोति' । दानं ददातीत्यर्थः । 'त्वं रै किं करिष्यसि' । श्रौषट् वौषडिति वषट्शब्दार्थौ ॥ स्वाहेति स्वधेति च व्याख्यातम् । तुमिति तुङ्कारे । 'गुरुं हुंकृत्य तुङ्कृत्य–' इति । तथाहीति निदर्शने । तथाहि ते शीलमुदारदर्शने' । खल्विति निषेधवाक्यालंकारजिज्ञासानुनयेषु । निषेधे–'खलुक्त्वा खलु वाचिकम्' । वाक्यालंकारे–'अथो खल्वाहुः' । जिज्ञासायाम्–'स खल्वधीते वेदम्' ? । अनुनये–न खलु न खलु मुग्धे–साहसं कार्यमेतत्' । नियमनिश्चयहेतुविषादेषु च । नियमे–'प्रवृत्तिसाराः खलु मादृशां धियः' । निश्चये–'खलु दानम्' । हेतौ–'त्वदधीनं खलु देहिनां सुखम्' । विषादे–'न विदीर्ये कठिनाः खलु स्त्रियः' । किलेति वार्ताऽरुचिन्यक्करणसंभाव्यहेत्वलीकेषु । वार्तायाम्–'जघान कंसं किल वासुदेवः' । रुचौ–'एवं किल केचिद्वदन्ति' । न्यक्करणे–'त्वं किल योत्स्यसे' । संभाव्ये–'पार्थः किल विजेष्यते कुरून् प्रवीरान्' । हेतौ–'स किल कविरेवमुक्तवान्' । अलीके–'गोत्रस्खलितं किलाऽशुभं कृत्वा' । तथेति सादृश्ये । 'यथा हरिस्तथा हरः' । अयं च

अथ। स्म। अस्मि। अ। इ। उ। ऋ। ऌ। ए। ऐ। ओ। औ। आङ्। अ मा नो नाः—प्रतिषेधे। उत्। ओकस्। आदह। आतङ्क। वेलायाम्। मात्रायाम्। यथा। किम्। यत्। यम्। हा।

'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञकथाल्प्रत्ययान्तो न गृह्यते। तस्य 'तद्धितश्च-' इत्यादिनाऽव्ययत्वसिद्धेः। आद्युदात्तत्वं च लित्स्वरेणैव। कस्य तर्हि ग्रहणम्?। तत्सदृशस्याऽव्युत्पन्नस्य। ननु च तस्यापि 'विभक्तिप्रतिरूपकाश्च' इत्यनेनैव सिद्धम्?। सत्यम्। तस्यैवायं प्रपञ्चः। एवमन्यत्रापि विभक्त्यादिप्रतिरूपकेषु ज्ञेयम्। समुच्चयाभ्युपगमयोरपि 'देवदत्तो यथा गच्छतु तथा यज्ञदत्तः'। तथेति प्रतिज्ञायाम्। अथेति व्याख्यातम्। स्मेत्यतीते पादपूरणे च। 'वक्ति स्म व्यासः'। 'इती ह स्माहुराचार्याः'। अस्मीति अहमित्यर्थे। 'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्राऽस्मि करोमि सख्यः'। अकारादयो यथासंभवं संबोधनभर्त्सनानुकम्पापादपूरणप्रतिषेधेषु वर्तन्ते। 'अ अनन्त'। 'इ इन्द्रं पश्य'। 'उ उत्तिष्ठ'। ऋ ऌ एतौ मन्त्रस्तोभवचनौ। 'ए इतो भव'। 'ऐ वाचं देहि धैर्यं नस्तव हेतोरसुसुवत्'। 'ओ श्रावय'। औ—अयमपि मन्त्रस्तोभवचनः। आङिति ईषदर्थाभिविधिमर्यादाक्रियायोगेषु। ईषत् पिङ्गलः आपिङ्गलः। अभिविधौ—'आ कुमारं यशः पाणिनेः'। मर्यादायाम्—'ओदकान्तात् प्रियं पान्थमनुव्रजेत्'। अमानोनाः प्रतिषेधे। एते प्रतिषेधे वर्तमानाश्चादयः। 'अविप्र इव भाषसे'। विप्रवन्न ब्रूषे इत्यर्थः। 'मा भवतु'। 'नो जानीमः'। 'नैकः सुप्तेषु जागृयात्'। उदिति अप्यर्थे। 'उदरमन्तरं कुरुते'। अरमपि-अल्पमप्यन्तरं—कुरुत इत्यर्थः। उञिति ञितमपि पठन्ति। संतर्कसंबोधनपूरणेषु। 'तद्वायुस्तदु चन्द्रमाः'। ओकस् इति आश्रये। आदहेति हिंसोपक्रमकुत्सनेषु। 'आदहारीन् पुरंदरः'। आदह भक्तस्य भोजनाय'। 'कुर्वादह यदि करिष्यसि'। आतङ्केति कुत्सनाऽविनाशयोः। 'आतङ्क क्षीरं दधिभावनाय'। प्रतिग्रहेपीति शाकटायनः। वेलायामिति कालपरिमाणे। मात्रायामिति अल्पपरिमाणे। मात्रायां भोजकः। यथेति योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु। योग्यतायाम्—'यथारूपमूढा कन्या'। वीप्सायाम्—'यथादेवं नमति'। अनतिक्रमे—'यथाशक्ति करोति'। सादृश्ये—'यथा हरिस्तथा हरः'। किमिति इच्छाजुगुप्सयोः। 'किं गतोऽसि'। 'किंराजा यो न रक्षति'। ईषदर्थातिशययोरपि—'न किमप्यस्यास्ति'। 'किमप्येष प्रगल्भते'। यदिति हेतौ। 'यत्सभासु प्रथसे तत्पूज्योऽसि'। यमिति यदित्यर्थे। हा इति विस्मयविषादशोकजुगुप्सार्तिषु। हा पाटलिपुत्रं लब्धम्'। 'कन्यान्तः—पुरमेव हा प्रविशति'। 'हा क्रुद्धो मुनिर्भार्गवः'। 'हा प्रिये जानकि'। 'हा देवदत्त'। 'हा हतोस्मि

ह । हे । है । पाट् । प्याट् । आहो । अथो । ननु । मन्ये । न हि । उताहो । असि । ब्रूहि । न तु । इति । इव । ओम् । फट् । वषट् । यदि । हो । इहि ।

---

मन्दभाग्यः' । ह इति विनियोगाऽतिक्रमपादपूरणेषु । 'त्वं ह ग्रामं गच्छ अयं हाऽरण्यं गच्छतु' । 'स्वयं ह ओदनं भुङ्क्ते, उपाध्यायं सक्तून् पाययति' । 'इति ह स्माहुराचार्याः' । हे है पाट् प्याट् एते चत्वारोऽपि संबोधनार्थाः । 'हे देवदत्त' । 'है देवदत्त' । 'पाट् पाठकाः' । 'प्याट् पान्थाः' । आहो इति विकल्पे । अयं स्थाणुराहो पुरुषः' ? । चेदर्थेपि । 'आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं को नाम स्यादवटुकुहरालोकनेऽप्यस्य कल्पः' ।

अथो इत्यथाऽर्थवत् । अन्वादेशेपि । 'इमं वेदमध्यापय अथो एनं छन्दोऽध्यापय' । नन्विति प्रश्नावधारणानुज्ञेच्छानुनयामन्त्रणेषु । 'नन्वधीषे' । 'नन्वद्य गच्छामः' । 'नन्वादिश' । 'ननु भुङ्क्ते' । 'ननु चण्डि प्रसीद मे' । वाक्यारम्भादौ च । 'नन्वपोहः प्रसूयते' । आक्षेपे–'ननु किमर्थमागतोसि' । प्रत्युक्तौ–'अकार्षीः कटं चैत्र' 'ननु करोमि भोः' । मन्ये इति वितर्के । 'मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुत्सुकः' । नहीत्यभावे । 'नहि प्रयोजनापेक्षं प्रेम' । उताहो इति विकल्पे । 'गौरयमुताहो गवय इति' । असीति त्वमित्यर्थवाक्यालंकारयोः । 'वेत्स्यसि' । 'शाधि वस्त्वमसि सभ्यमभ्यधाः' । ब्रूहीति प्रैषानुज्ञावसरेषु । 'ब्रूहि ब्राह्मणाः' । नतु इति निषेधे । 'नतु करोति' । इतीति हेतुप्रकारप्रकर्षएवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्तिप्रकृतिवक्ष्यमाणपरामर्शमतेषु । 'हन्तीति पलायते' । 'गौरश्वो हस्तीति जातिः' । 'इतिपाणिनि' । पाणिनिशब्दः प्रकर्षेण प्रकाशते इत्यर्थः । 'क्रमादमुं नारद इत्यबोधि सः' । 'ज्वलितिकसन्तेभ्यो णः' । 'वृद्धिरित्येव या वृद्धिः' । 'तदस्याऽस्त्यस्मिन्निति मतुप्' । 'पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि' । 'इत्युक्तवन्तं परिरभ्य दोर्भ्याम्' । विनिश्चयार्थामिति वाचमाददे' । 'इत्यापिशलिः' । इवेति ईषदर्थोपमोत्प्रेक्षावाक्यालंकारेषु । 'कडार इवायम्' । 'चन्द्र इव मुखम्' । 'लिम्पतीव तमोऽङ्गानि' । 'कथमिवैतद्भविष्यति' ? ।

ओमित्याभ्यादानाऽभ्युपगमसमाप्त्यर्थेषु । मङ्गलप्रयोजनश्च । 'ओं अग्निमीळे पुरोहितम्' । 'ओमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभः' । 'ब्रह्मभूर्भुवः स्वरोम्' । फडिति विघ्ननिराकृतौ । 'अस्त्राय फट्' । वषडिति व्याख्यातम् । यदीति पक्षान्तरे । 'यदि शमः किं तपसा' । हो इति संबोधने । 'दुःसहो हो वियोगः' । इहीति तिङन्तप्रतिरूपकं गच्छेत्यर्थे । एहि इति पाठे–प्रहासे । 'एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽति-

इह। तत्। आहोस्वित्। उपरि। सीम्। कम्। आम्। हिम्। वाम्। स्नुकम्। शुकम्। अनुकम्। नहिकम्। सत्यम्। ऋतम्। नो चेत्। नचेत्। जातु। कथम्। कुतः। कुत्र। अनु। अव। हाहौ। हैहा। इहौ। शंवट्। द्य। दिष्टया। पशु। सह। आनुषक्। भाजक्। अङ्ग। स्नाक्। अरे। चटु। चाटु। हुम्। कुम्। लुम्। खुम्। वै। * उपसर्ग-

थिभिः'। इहेति अत्रेत्यर्थे। 'इह मुहुर्मुदितैः कलभैरवः'। तदिति हेतौ। 'यत् सभासु प्रथसे तत् पूज्योऽसि'। अहोस्विदिति आहोवत्। उपरि इत्युपरिष्टादर्थे। 'जगतामुपरि हरिः'। सीमिति सर्वतो भावे। कमित्यनकर्थके पादपूरणे च। आमिति प्रतिवचनाऽवधारणयोः। 'आं किं ब्रवीति'। 'आं चिरस्य प्रतिबुद्धोऽस्मि'। हिमिति स्तोभवचनः। वामिति युवामित्यर्थे। 'गेये केन विनीतौ वाम्'। स्नुकमित्यतिशये। 'स्नुकं शोभते'। शुकमिति शैघ्र्ये। 'शुकं गच्छति'। अनुकमिति वितर्के। नुकमिति केचित्। नहिकमिति निषेधे। 'अस्ति ते किंचित् नहिकम्'। सत्यमिति प्रश्नप्रतिषेधसत्येषु। 'सत्यं करोषि'। 'ननु किमेवं सत्यम्'?। 'सत्यं मनोज्ञाः श्रियः'। ऋतमिति सत्यार्थे। 'ऋतं ब्रवीषि'। नो चेन्न चेदिति निषेधे। 'नो चेत् कार्यम्'। जातु इति कदाचिदर्थे। 'न जातु कामः कामानामुपभोगेन शाम्यति'। कथमिति प्रकारप्रश्ने। 'कथं कृतम्?'। 'इत्थं कृतम्'। कुत इति प्रश्ननिह्नवयोः। 'कुत आगच्छति'। 'कुतो मे हिरण्यम्'। कुत्रेति देशप्रश्ने। 'कुत्र तिष्ठति देवदत्तः'। अनु अव इति उपसर्गप्रतिरूपकौ अनु अव इत्येतयोरर्थे वर्तेते। उपसर्गप्रतिरूपकयोरपि पाठः प्रपञ्चार्थः। हाहौ हैहा इहौ एते त्रयोऽपि स्तोभार्थाः। शंवडिति अन्तःकरणे आभिमुख्येपि। 'शंवट् शुद्धया सर्वं जयति'। 'शंवट् शुको धावति'। (छंवडितिपाठान्तरम्)। द्य इति पादपूरणहिंसाप्रातिलोम्येषु। 'द्य हिनस्ति मृगं व्याधः'। दिष्टयेत्यानन्दे। दिष्ट्या वर्धामहे'। सभाजनदर्शनप्रातिलोम्येष्वित्येके। पशु इति सम्यगर्थे। 'पशु मन्यमानाः'। दर्शनीयमात्मानं सम्यक्प्रतिपद्यमाना इत्यर्थः। सहेति सार्धमित्यर्थे। आनुषगित्यानुपूर्व्ये। 'आनुषग्ब्रवीतीह बन्धुता'। भाजक् इति शैघ्र्ये। 'भाजग्गच्छति'। अङ्गेति संबोधने। 'अङ्ग कुरु'। स्नागिति झटित्यर्थे। अरे इति नीचसंबोधने। 'अरे शूद्र'। चटु चाटु इत्येतौ प्रियवाक्ये। 'चटु वदति चाटुकारः'। 'हु'मित्यनिच्छाभयभर्त्सनकोपेषु। 'हुं मुञ्च'। 'हुं राक्षसोयम्'। 'हुं निर्लज्जाऽप्रसर'। 'हुं मातर्दैवतानि धिक्'। कुं लुं खुम् इति मन्त्रस्तोभवचनाः। वै पादपूरणे। 'बृहस्पतिर्वै देवानां पुरोहितः'। विशेषेऽपि। उपसर्गेति। उपसर्गप्रतिरूपका उपसर्गसदृशाश्च निपाता ज्ञेयाः।

विभक्तिस्वरप्रतिरूपकाश्च *। भूयस्। अलम्। सुष्ठु। कामम्। पुरस्। आशु। तर्हि। रहस्। सपदि। इत्यादयो निपाताः। प्रादयश्च। ऊरी उरी उररी इत्यादयोऽन्येऽपि प्रयोगवशाज्ज्ञेयाः। इति चादयः॥

---

अथ अजादिगणः। अजा एडका कोकिला चटका अश्वा मूषिका (इति जातिः)। बाला

---

* ते च केचित् दर्शिताः, अन्ये प्रयोगानुसारेण ज्ञेयाः। भूय इति पुनरर्थे। अलमिति व्याख्यातम्। सुष्ठु इति प्रशंसायाम्। 'सुष्टूक्तम्'। पुर इत्यग्रे, पूर्वदेशपूर्वकालयोश्च। पुरोगाः। पुरस्तिष्ठति। पुरस्कृतम्। आश्विति क्षिप्रे। आशु करोति। तर्हीति विशेषे। 'बलवानर्जुनः, कृष्णस्तर्हि बलवत्तरः'। रह इत्येकान्ते। रहः करोति। सपदीति क्षिप्रार्थे। इत्यादयः। इतिशब्देन चादीनां प्रत्यवमर्शः। आदिशब्देन 'प्रादयः' इत्यादिभिः 'अधिरीश्वराः' इत्येतत्पर्यन्तैः सूत्रैरुक्ता उच्यन्ते इति सर्वे निपाता ज्ञेया इत्यर्थः। अनेन 'प्राग्रीश्वरान्निपाताः' इति सूत्रं व्याख्यातम्। तांश्च 'प्रादयः' इत्यादिभिः सूत्रैः कथितान् निपातान् दर्शयति। प्रादयश्च ऊरी उररी उरी इत्यादयः पठिताः कथितार्थाश्च। ऊर्याद-यस्त्रयोऽप्यङ्गीकारे विस्तारे च। 'ऊरीकृत्याज्ञां याति'। अङ्गीकृत्येत्यर्थः। 'ऊरीकृत्य पटं गतः'। विस्तार्येत्यर्थः। आदिशब्देन पाम्पी ताली इत्यादिः ऊर्यादिगणः, च्व्यन्ता डाजन्ता अनुकरणं सत् असत् इत्यादयो गतिसंज्ञाः कर्मप्रवचनीयाश्चाधिपर्यन्ता उच्यन्ते। अन्येपि प्रयोगवशाज्ज्ञेया इति। कथितेभ्योन्येऽपि प्रयोगवशान्निपाता ज्ञेया इत्यर्थः। एतच्च चादिगणस्याकृतिगणत्वाल्लभ्यते। ते च हये सुदि वदि प्रत्युतेत्यादयः। अर्थकथनं चैषामुपलक्षणं वेदितव्यम्। तथा चोक्तम्—

'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्॥' इति॥

इति श्रीगुरुप्रसादशास्त्रिसङ्कलितः काशिकाप्रक्रियाकौमुदीप्रसादानुसारी स्वरादिचादिगणपाठः।

---

अथाऽजादिगणः। अजत्वजातिविशिष्टा स्त्री–अजा=वर्करी। (बकरी)। एडकत्वजातिविशिष्टा स्त्री एडका=मेषी। (मेढी)। कोकिलत्वजातिविशिष्टा स्त्री कोकिला-परभृता। (कोयल)। चटकत्वजातिविशिष्टा स्त्री चटका। (चिड़िया)। अश्वत्वजातिविशिष्टा स्त्री–अश्वा। (घोडी)। मूषकत्वजातिविशिष्टा स्त्री मूषिका। ('चुहिया' 'चूसी')। बालत्ववयोविशिष्टा स्त्री बाला। षोडशवर्षा ततो न्यून

होडा पाका वत्सा मन्दा [ इति वयः ]। विलाता पूर्वापहाणा ( पूर्वापिहाणा ) अपरा-
पहाणा। [ इति टित् ]। सम्भस्त्राजिनशणपिण्डेभ्यः फलात्। सदच्काण्डप्रान्तशतै-
केभ्यः पुष्पात्। शूद्रा चामहत्पूर्वा जातिः। क्रुञ्चा उष्णिहा देवविशा। ज्येष्ठा
कनिष्ठा मध्यमेति पुंयोगेऽपि। मूलान्नञः। [ दंष्ट्रा[3] ]॥ एतेऽजादयः।

वा स्त्री। होडत्ववयोविशिष्टा स्त्री **होडा**–बालिका। प्रथमवयोविशिष्टेति यावत्।
( बच्ची )। पाकत्ववयोविशिष्टा **पाका**–शिशुः। **(बच्ची)**। **वत्सा**- स्तनपा बालिका।
**( बच्ची )**। मन्दते-स्वपिति इति **मन्दा**–बाला। युवतिरित्यपरे। स्त्रीजातिरित्यन्ये।
विलातत्ववयोविशिष्टा **विलाता**–बाला। अपहीयतेऽनेनाऽस्मिन्वाऽसौ अपहानः, पूर्वः
अपहानोऽस्याः **पूर्वापहाणा**=प्रथमापराधिनी। अतएव निपातनाण्णत्वम्। **केचित्तु**–
अपहीयतेऽनयाऽस्यां वा अपहाणा, पूर्वस्यापहाणेति विगृह्णन्ति। अपहाणेत्यत्र टित्वान्ङीषु
न, गणे पाठस्यवैयर्थ्यप्रसङ्गादित्याहुः। यद्वा पूर्वश्चासावपहानश्चेति पूर्वापहानः, स्त्री चेत्पूर्वा–
पहाणेत्यपि विग्रहो बोध्यः। निपातनाण्णत्वम्। यद्वा पूर्वमपहानं–गमनं–यस्याः सा पूर्वा-
पहानेति विग्रहः। **पूर्वापिहानेति** केचित्पठन्ति। अपरमपहानं यस्याः सा **अपराप-**
**हाणा**=द्वितीयाऽपराधा। द्वितीयविरुद्धाऽऽचरणवती वा। **परापहाणेति परप्रहाणेति-**
वा क्वचित्पाठः। **संप्रहायणेत्यपि** क्वचित् पठ्यते। व्याकरणसरस्वतीकण्ठाभरणकारः
श्रीभोजस्तु–'पूर्वापहायणा' 'अपरापहायणा' 'संप्रहायणे'ति पठति। **संभस्त्रेत्यादि** गण-
सूत्रम्। संभस्त्रादिभ्यः परस्मात्फलशब्दाट्टाप्स्यादिति तदर्थः। संफला। भस्त्रफला। ङ्यापो-
रिति ह्रस्वः। भस्त्राफलेति क्वचित्पाठः। अजिनफला। शणफला। पिण्डफला। ओषधि-
विशेषे रूढा एते। **सदजिति**। सदादिभ्यः परस्मात्पुष्पशब्दाट्टाप्स्यादित्यर्थः। सत्पुष्पा।
प्राक्पुष्पा। प्रत्यक्पुष्पा। काण्डपुष्पा। प्रान्तपुष्पा। शतपुष्पा। एकपुष्पा। ओषधिविशेषवचना
एते। **शूद्राच्चामहत्पूर्वाज्जातिरिति** हि गणसूत्रमर्थतःपठति–**शूद्रेति**। शूद्राशब्दष्टाप-
मुत्पादयति जातिश्चेद्वाच्या। शूद्रा। महत्पूर्वः शूद्रशब्दष्टापं नोत्पादयति, जातिश्चेद्वाच्येत्यर्थः।
महाशूद्री। क्रुञ्चत्वजातिविशिष्टा स्त्री **क्रुञ्चा**। **(क्रौञ्च पक्षिजातिकी स्त्री)**। **उष्णिक्**–
**उष्णिहा**- छन्दभेदः। **देवविशा**–देवानां प्रजा। ज्येष्ठस्य स्त्री **ज्येष्ठा** **( जिठानी या**
**बड़ी)**। कनिष्ठस्य स्त्री **कनिष्ठा** (छोटेकी स्त्री या छोटी)। मध्यमस्य स्त्री **मध्यमा** (मध्यमकी
स्त्री वा मझोली)। **मूलादिति**। नञः परान्मूलाट्टाप्स्यात्। **अमूला**–ओषधिविशेषः।
**दंष्ट्रा**–दंष्ट्रिका। ( **'जाड़' दाढ'** )। **अजादिराकृतिगणः**। तेन–कन्या त्रिफला

१ 'पूर्वापहणा'। २ 'अपरापहणा'। ३ क्वचिन्न।

अथ स्वस्रादिः। स्वसृ दुहितृ ननान्द यातृ मातृ तिसृ चतसृ। इति स्वस्रादिः।

अथ समानादिगणः। समान एक वीर पिण्ड श्व भर्तृ[६] भ्रातृ[६] भद्र पुत्र। दासाच्छन्दसि। इति समानादिः।

अथ गौरादिगणः। गौर मत्स्य मनुष्य शृङ्ग तुङ्ग[६] पिङ्गल हय गवय मुकय ऋष्य पुट[७] [तूण[६]] द्रुण द्रोण अरीहण[१] (कोकण[२]) (कण[३]) काकण पटर[४] उकण[५] आमल आम-

परमृता वडवा वलाका मध्या मुग्धेत्यादयोऽपि सिध्यन्ति।

**अथ स्वस्रादिः।** **स्वसा**=भगिनी। (वहिन) **दुहिता**-पुत्री। **ननान्दा**-पतिभगिनी। **ननन्द**)। **याता**-पतिभ्रातृभार्या। (देवरानी जिठानी)। **माता**-जननी। **तिस्रः**=तिस्रः स्त्रियः। (तीन स्त्री)। **चतस्रः**=चतस्रः स्त्रियः। **चार**)

**अथ समानादिगणः।** **समानः**=तुल्यः। समानस्य सभावो निपातनात्। सपत्नी। **एकः**=केवलः एको वा। एकपत्नी। **वीरः**=शूरः। वीरपत्नी। पिण्डः=भृतिः अन्नं वेतनमेव वा पतिर्यस्याः सा **पिण्डपत्नी**=वेश्या, कुम्भदासी, आश्रिता, सुरतार्थिनी च। पुत्रः पतिर्यस्याः सा पुत्रपत्नी=स्नुषा। **भ्रातृपत्नी**=भ्रातृजाया। **दासाच्छन्दसि।** दासश्छन्दसीति पाठान्तरम्। 'दासपत्नीरहिगोपा' इतिवेदे। लोके तु 'विभाषा सपूर्वस्ये'ति विकल्पेन नकारादेशः। दासपत्नी दासपतिः स्त्री। पूर्वजशब्दो भद्रशब्दश्च क्वचित्पठ्येते। पूर्वजपत्नी। भद्रपत्नी। 'श्व' 'भर्तृ' इति क्वचिल्लिखिते पाठः। 'श्व' 'शिरी'ति तु पाठो मुद्रितेषु क्वचित् दृश्यते। स च लिखितेषु नास्तीत्यवधेयम्। **इति समानादिः।**

**अथ गौरादिगणः।** **गौर।** **गौरी**-पार्वती गौरवर्णा स्त्री च। **मत्स्य।** मत्स्यत्वजातिविशिष्टा स्त्री **मत्सी**-जलचरी। **मत्स्या** नाम देशः, तद्देशस्य राजा च मत्स्यः। मत्स्यानां राज्ञी, मत्स्यस्य राज्ञोऽपत्यं स्त्री वा-**मत्सी।** **मनुष्य।** मनुषी-मनुष्यी वा मनुष्यजातिस्त्री। **शृङ्ग।** शृङ्गी-प्रतिविषा नामौषधिः। **तुङ्ग**[६]। तुङ्गी। **पिङ्गल।** पिङ्गली-पिङ्गलवर्णा। अयं काशिकागणरत्नादौ नास्ति। **हय।** **हयी**-अश्वा। **गवय।** गवयी-गोसदृशगवयनामकमृगविशेषजातिस्त्री। **मुकय।** **मुकयी**-पशुजातिविशेषस्त्री। गर्दभ्यामश्वतराज्जाता वा। **ऋष्य।** ऋष्यी-हरिणजातिविशेषस्त्री। (रोज)। **पुट।** **पुटी**=पलाशादिपुटः। ('दोना' 'डुण्डा' 'कटोरी')। **तूण।** तूणी=निषङ्गः। '**तूणी** तु नील्यां तूणौ निषङ्गके' इति विश्वः। अस्य गणरत्नादौ काशिकादौ च पाठो नास्ति। **द्रुण।** **द्रुणी**-कच्छपी जलद्रोणी च। 'द्रुण्यम्बुद्रोणीकच्छप्यो'रिति मेदिनी। **द्रोण।** '**द्रोणी** काष्ठाम्बुवाहिनी'इत्यमरः। 'द्रोणी

१ 'हरोकण'। २ 'हरिण'। ३ 'कण' 'कङ्कण'। ४ 'पिठर'। ५ 'ऊणक'। ६ क्वचिन्न। ७ 'पट्ट'।

जलक्षेपिका (नौकाकृति)रिति **गणरत्नकृत्**। **अरीहण**। अरीहणी, पाठान्तरे हरीकणी चौषधिः। हरिणेतिपाठे **'हरिणी** शुक्लवर्णयुक्ते'ति **गणरत्नकृत्**। **'हरिणी** स्यान्मृगी हेमप्रतिमा हरिता च या' इत्यमरः। **काकण**। **काकणी**–पणचतुर्थभागः ( २० कौडी, एवं १ कौडी )। 'पणगण्डकयोस्तुर्य उदमानस्य **काकणी**' इति रुद्रकोशः। कोशेषु–काकिणीकाकिनीशब्दावपि दृश्येते। इह गणे 'काकण'शब्दो वृत्तौ प्रक्रिया-कौमुदी-व्याख्याने च न दृश्यते। किन्तु तस्य स्थाने **कण**शब्दपाठो दृश्यते। स च नोचितः' 'मागधी कणा'इत्यादि प्रयोगविरोधात्। **पिठर**। पिठति हिनस्ति तण्डुलानिति पिठरी–स्थाली। ( वटलोही )। 'पटर' इत्येवं पाठः **काशिका–प्रसादादौ**। **गणरत्ने** तु पिठरेति पठ्यते। तदनुसारेणैव सर्वत्र 'पटर' इति पिठरेत्यस्यापभ्रंशः प्रतीयते। **'पेटर'** इत्यन्ये पठन्ति। **पेटरी**। ( पिटारी )। **ओकण**। **ओकणी**–ग्राम-पर्यन्तवनम्। **उकणे**त्यन्ये। **उकणी ऊकणे**त्यन्ये। **ऊणके**ति तु **शब्दकौस्तुभे** लिखितगणपाठे च।

**आमलक**। **आमलकी**=धात्री ( आंवला का वृक्ष )। **आमलेत्यपि** क्वाचित्कः पाठः। **कुवल**। **कुवली**–क्षुद्रवदरी। ( 'वेरी' 'झाडी' )। **विम्ब**। **विम्बी**–तुण्डिका। ( विम्बिका )। वनस्पतिजातिरित्येके इति **गणरत्नम्**। विम्वेत्योष्ठ्यादिरित्येके। विम्वी। ( करौंदा )। **विल्वे**ति तु शब्दकौस्तुभे। **विल्वी**–वनस्पतिजातिः। तथा च प्रयोगः–'खण्डविल्वीदलानि'। **वदर**। **वदरी**–वृक्षभेदः। (वेरी)। **कर्कर**। **कर्करी**–जलभाजनम्। [ 'करी' 'तूतिया' 'झारी' 'करुवा' ]। काशिकादौ नायं दृश्यते। **गणरत्ने** त्वयं पठ्यते। **कर्कट**। कर्कटीत्यन्ये। **कर्करक**। कर्करकी। **'कर्करक'**इत्यत्र **'फर्करक'**इति प्रायोमुद्रितेषु प्रचलितः पाठस्तु भ्रष्ट एव वोध्यः। **वर्कर**। वर्करी। **तर्कार**। तर्कतीति **तर्कारी**–जया नाम औषधिः। 'जया जयन्ती तर्कारी नादेयी भूमिजम्वुका' इत्य-मरः। **शर्कार**। **शर्कारी**–ओषधिभेदः। कन्दभेदो वा [**'शकरकन्दो'**किं स्वित्स्यात्?]। **पुष्कल**। **पुष्कली**–वनस्पतिभेद इति **गणरत्ने**। **पुष्करे**ति तु पाठः **काशिका-प्रसादादौ**। **पुष्करी**–वनस्पतिभेदः। **शिखण्ड**। **शिखण्डी**—वनस्पतिभेदः। गणरत्ने त्वस्य पाठो नास्ति। **सलद**। **सलदी**–ओषधिभेदः। **गणरत्नादौ** त्वस्य पाठो न दृश्यते। **सलन्दे**ति काशिकायां, सनन्देति च क्वचित्पाठः। **शष्कण्ड शष्क-**

१ विल्व। २ फर्करक'। ३ आलिन्द। 'अलन्द'।

सनन्द सुषम सुषव अलिन्द गडुल[1] षाण्डश[2] [सरस्]आढक आनन्द आश्वत्थ सृपाट आखक[3] आपच्चिक[4] शष्कुल सूर्य सूर्म शूर्प सूच यूष ( मूष ) यूथ सूप मेथ वल्लक धातक सल्लक

ण्डी–हिमालयपर्वतोत्पन्नो वृक्षभेद इति **गणरत्न**कृत्। इतोऽग्रे–**सनन्देति,सलन्देति** वा क्वचित्पाठः। ओषधिभेदाविमाविति कश्चित्। गणरत्नादौ तु नेमौ शब्दौ दृश्येते। **सुषव**। **सुषवी**–कृष्णजीरकम्। सुषमीत्यपि क्वचित्पठ्यते। **सुषमी** ओषधिभेदः। **अलिन्द**। अलिन्दी–देहली। **अल्यते**–भूष्यते पुष्पप्रकरादिना–अलिन्दीति व्युत्पत्तेः। अल्यन्ते वार्यन्ते भाजनानि पतनादस्यां सा–**अलिन्दी**–कोष्ठिका ( कोठी ) इत्यपि **गणरत्ने**। **गडुल**। **गडुली**–कुब्जा। 'गडुलः कुब्ज' इत्यमरः। ओषधिभेदइत्येके। गण्डुलेत्यपि क्वचित्पाठान्तरम्। **गडुजेति** तु **काशिकाशब्दकौस्तुभयोः पाठः**।

**षाण्डश (षाण्डस)**। षाण्डसी–काचित्। अयं गणरत्ने न दृश्यते। अत्र 'सरस्' इति पाठः स्यात्। **सरसी**–महत्सरः। अयमेव च गणरत्नादिसम्मतः। **आढक**। **आढकी** तु तुवर्यां स्त्री' इत्यमरः। (अरहर)। '**आढजीतिकेचिदाहु**'रिति **गणरत्ने**। **आनन्द**। आनन्दी। "**आसन्दी**–वेत्रासनम्। (कुर्सी)। आनन्दीतिपाणिनिः"इति **गणरत्ने**। तेनाऽत्र आसन्देति केषां चित्पाठ इत्यनुमीयते। **आश्वत्थ**। आश्वत्थी–काचित्। अयं गणरत्ने काशिकायां प्रसादे च नास्ति। केवलं लिखितमुद्रितगणपाठे दृश्यते। **सृपाट**। सर्पति गच्छति क्षुद्रद्रव्यसङ्घातमिति **सृपाटी**–क्षुद्रपुस्तकः, उपानत्, कुप्यं, परिमाणविशेषश्चेति **गणरत्ने**। **'सृगेट'** इत्यधिकः पाठ काशिकायाम्। **कटेटेति** तु गणरत्ने। कटस्य ईटः–कटेट इति च विग्रहः। 'आष्टक' 'आखक'–'आछक' इति क्वचित्पाठः। किमत्र शुद्धं रूपमिति चिन्त्यम्। **आपच्चिक**। आपच्चिका आपिच्छिका वा देशास्तद्राजानश्च,तस्यापत्यं स्त्री-आपच्चिकी। आपच्छिकी वा। **शष्कुल**। **शष्कुली**–पोलिका कर्णशष्कुली च (पूडी, याकान की लौ)। **सूर्म**। **सूर्मी**=अयःप्रतिमा। तथा च '**सूर्मी** ज्वलन्तीमालिङ्गेन्मृत्यवे गुरुतल्पगः' इति स्मृतिः। **सूर्मी** स्थूणाऽयःप्रतिमा' इत्यमरः। शूर्मीति तालव्यादिं **मुकुटः** पठति। 'सूर्य। **सूरी**–कुन्ती। सूर्यतिष्येति यलोपः। [सुवेति काशिकायामधिकः पाठः। 'शूर' इति प्रसादेऽधिकः पाठः]। **शूर्प**। शूर्पी–मानभेदः परिपवनं च ( 'सूफ' 'छाज' )। **सूच**। सूची। एवं **सूर्प**। सूर्पी। **सूप**। सूपी। **शूष**। **शूषी**-काचित्। **यूष**। यूषति ज्वरं हिनस्तीति **यूषी** (जूस)। **यूथ**। **यूथी**–मागधी। यूथिका (जूही)। **मेथ**। **मेथी**। (मेथी)। यूपीतिभोजः। पूषीति क्वचित्पठ्यते। मूषीति क्वचित्। **वल्लक**। **वल्लकी**–वीणा।

१ 'गडुज'। २ षण्डश' 'सण्डस्' पा०। ३'आष्टक'। ४ 'आपिच्छिका राजान' इति पदमञ्जर्याम्।

मालक[1] मालत साल्वक वेतस वृस [वृष[2]] अतस [उभय[3]] भृङ्ग मह मठ छेद पेश मेद श्वन् तक्षन्। अनडुही अनड्वाही। एषणः करणे।

देह देहल काकादन गवादन तेजन[5] रंजन[6] लवण यान मेध गौतम

---

**धातक**। **धात**की–ताम्रपुष्पी ( धाय )। **सल्लक**। **सल्लकी**–गजप्रिया। गजभक्ष्यवृक्षविशेषः। (सलई)। **मालकेति** काशिकायाम्। **ह्रालकेति** प्रसादेऽधिकःपाठः। माल्लकेति पाठान्तरम्। **मालत**। **मालती**–जातिः। 'सुमना मालती जातिः' इत्यमरः। ( चमेली )। **साल्वक**–इति काशिकायां। 'शाल्वक' इति **प्रसादे**। शाल्वकी, साल्वकी वा। गणरत्ने तु न दृश्यते। **वेतस**। **वेतसी**–वेत्रलता। ( वेतकी लता )। **वृष**। वृषी। **वृस**। वृसी च–मुनीनामासनम्। काशिकादिस्थे पाठान्तरे–वृसी च सैव। 'व्रतिनामासनं वृषी' इत्यमरः। 'अतसी वृसी मांसी'ति चन्द्रगोमिपाठाद्दन्त्यान्तोऽपि वृसीशब्दः। 'गण्डूषा मञ्जूषा वृषी'ति **लिङ्गकारिका**पाठान्मूर्धन्यान्तोऽपि। **अतस**। अतसी=क्षुमा। 'अतसी स्यादुमा क्षुमा' इत्यमरः।(तीसी अलसी)। अयं क्वचिन्न। **उभय**शब्दपाठः क्वचिन्न। **गणरत्ने** तु दृश्यते। उभयी। **भृङ्ग**। **भृङ्गी**–भृङ्गराजः ( भंगरैया ), लवङ्गो वा (लौंग)। **मह**। **मही**–पृथिवी। **मठ**। **मठी**–छात्रादिनिवासः। 'मेठ' इति पाठान्तरम्। **छेद**। छेदी खण्डः। **पेश**। पेशी–मांसपेशी। ( अण्डा ), खड्गपिधानं च। **मेद**। मेदी। काशिकायां गणरत्ने चायं नास्ति। **श्वन्**। शुनी। **तक्षन्**। तक्ष्णी–वर्द्धकिजातिःस्त्री। अनडुही अनड्वाही–गौः। **एषणः**–करणल्युडन्तो ङीषमुत्पादयति। अधिकरणादौ ङीषेव। स्वरे भेदः। एषणी–सुवर्णतुला ( कांटा )। 'नाराची स्यादेषणिका' इत्यमरः।। **देह**। देही। **देहल**। देहली। **काकादन**। काकादनी–ओषधिभेदः। (गुञ्जा)। **गवादन**। **गवादनी**–ओषधिभेदः, ('इन्द्रवारुणी' 'इन्द्रायण')। **तेजन**। **तेजनी**–ज्योतिष्मती। ( मालकांगणी )। 'टेभन' 'टेभण' इति पाठान्तरं प्रसादे। तन्न गणरत्नादिसंमतम्। तस्माल्लेखदोष एव बोध्यः। **रजन**। '**रजनी** यामिनी तमी' इत्यमरः। (रात्रि, हरिद्रा)। **लवण**। **लवणी**-ओषधिः, समुद्रपार्श्वस्रोतश्च, यत्र वहित्राणि स्थाप्यन्ते। (बन्दरगाह)। पान इति यान इति वा पाठः। पानी। यानी। **मेध**। मेधी। मेधृ सङ्गमे इत्यस्मादचि रूपम्। मेघेति क्वचित्पठ्यते, स भ्रष्टः पाठः। **गौतम**। गोतमस्यापत्यं स्त्री–गौतमी। शार्ङ्गरवादित्वान्ङीनि प्राप्ते ङीषर्थमत्र पाठः। तत्र गणे पाठसामर्थ्याच्च पक्षे ङीनपि।

---

१ 'माल्लक'। २ 'वृक्ष' 'वृस'। ३ अयं पाठो गणरत्नादिसंमतः। ४ अयं पाठः **काशिकापदमञ्जर्योः** संमतः। ५ 'टेपन'। ६ 'रंजन'।

[ गोतमे ] [ पारके ] आयस्थूण ( अयःस्थूण ) भौरिकि भौलिकि भौलिङ्गि औद्राहमानि आलम्बि आलजि आलब्धि आलक्षि केवाल आपक आरट नट [टोट] कटेट नाट मूलाट शातन पातन पावन आस्तरण अधिकरण अधिकार (अग्र-

**आयःस्थूण**। अयोमयी स्थूणा यस्यासौ अयःस्थूणः, तस्यापत्यं स्त्री–आयःस्थूणी। शिवादित्वादण्। गणरत्ने तु–"अयोमयी स्थूणा यस्याः सा अयःस्थूणी–कुटी। तस्यान्यार्थे वृत्तिः। स्वार्थे तु अयःस्थूणेति स्यादिति कश्चि" दित्यप्युक्तम्।"आयःस्थेणीति केचि" दिति **गणरत्ने**। **भौरिकि**। भूरिकस्याऽपत्यं स्त्री–भौरिकी। **भौलिकि**। भूलिकस्यापत्यं स्त्री भौलिकी। **भौलिङ्गि**। भूलिङ्गस्यापत्यं स्त्री भौलिङ्गी। **औद्राहमानि**। उद्राहमानस्यापत्यं स्त्री औद्राहमानी। एभ्योऽणिञोरितिष्यञ् प्राप्तः। ( उद्वाहनेति गणरत्नेऽधिकः पाठः)। **'आद्राहमानि'** इतिक्वचित्पाठः। तत्र मूलं मृग्यम्। एतेभ्योऽणिञोरितिष्यञि प्राप्ते ङीषर्थोऽत्र पाठः। **आलम्बि**। अलम्बस्यापत्यं स्त्री आलम्बी। अणिञोरितिष्यञ् प्राप्तः। आलिङ्गीति काशिकापाठः। **आलजि**। अलजस्यापत्यं स्त्री। 'आलिञ्चि' इति प्रसादे पाठान्तरम्। **आलब्धि**। अलब्धस्यापत्यं स्त्री–आलब्धी। अणिञोरिति ष्यङ्प्राप्तः। [ कालब्धीति शाकटायनः ]। **आलक्षि**। अलक्षस्यापत्यं स्त्री–आलक्षी। इञन्तत्वात् ष्यङ् प्राप्तः। **आलज्यादीनां** त्रयाणां काशिकाप्रसादयोः पाठो न दृश्यते।

**केवाल**। केवाली–ओषधिभेदः स्यात्। अस्य मूलं मृग्यम्। शुद्धपाठश्चिन्त्यः। **आपक**। अस्यार्थो न ज्ञातः। किमत्र शुद्धं रूपमित्यपि न निश्चितम्। **आरट**। आरटी। **नट**। नटी। **कटेट**। कटस्य ईटः कटेटः। **कटेटी**–ओषधिः काचित्। 'टोट' इति मुद्रितः पाठःसर्वत्र। गणरत्नमनुसृत्य तु 'कटेट' इति पाठः स्थापितोऽस्माभिः। **नाट**। नाटयतीति **नाटी** काव्यभेदः प्रकरणिकाख्यः। तथा च–**'अनर्थोश्च वन्धयोगादेको भेदः प्रयोक्तृभिर्ज्ञेयः। प्रख्यातस्त्वितरो वा नाटीसञ्ज्ञाश्रितः काव्ये॥'** इति **गणरत्ने**। **मूलाट**। मूलैरटतीति **मूलाटी**–(कार्मणप्रसक्ता स्त्री)। **शातन**। शातयतीति शातनी। टित्त्वान्ङीप्प्राप्तः। **पातन**। पातयतीति पातनी। टित्त्वान्ङीप्प्राप्तः। **पावन**। पावयतीति–पावनी। टित्त्वान्ङीप् प्राप्तः। **आस्तरण**। आस्तरणी। टित्त्वान्ङीप्प्राप्तः। **अधिकरण**। अधिक्रियतेऽस्याम्–अधिकरणी। टित्त्वान्ङीप्प्राप्तः। **अधिकार**। अधिकः कारोऽस्याः–अधिक्रियते इति वा अधिकारी। टाप्प्राप्तः।

१ आयस्थूणेति क्वचित्पाठः। तत्र 'खपरे शरी'ति वा विसर्गलोपः। २ 'उद्वाहन'। ३ 'केवाली'। ४ अयं पाठः क्वचिन्न। ५ 'आयः स्थूणी'। ६ अमरेति पाठः स्यात्। अमरी।

हायणी ) आग्रहायणी प्रत्यवरोहिणी[1] सेचन[2]। सुमङ्गलात्सञ्ज्ञायाम्। पण्डर सुन्दर मण्डल मन्थर[3] मरौल[4] पट पिण्ड [विट] उर्द गूर्द शम सूर्द आण्ड (आर्द्र) हृद (हृंद) पाण्ड

**आग्रहायणी**। अग्रे हायनमस्याः—**आग्रहायणी**=मार्गशीर्षपौर्णमासी। अस्मादेव निपातनाण्णत्वम्। प्रज्ञादित्वात्स्वार्थेऽण्। अण्णन्तत्वान्ङीप्प्राप्तः। "ईकारान्तपाठः पुंवद्भावनिषेधार्थः—आग्रहायणीभार्य इति–" **प्रसादादौ**। वृद्धिनिमित्तस्येति तदपि सिद्धमिति चेत्, पुंवत्कर्मधारयेति प्रतिप्रसवस्थलेऽपि पुंवद्भावाऽभावोऽत्र पाठफलमित्याशय इति **शब्दकौस्तुभे**। "अग्रे हायनमस्या इतिविग्रहेऽत एव निपातनाद्दीर्घत्वं णत्वं चे"ति **गणरत्नकृत्**। अग्रहायनेति क्वचित् पाठो दृश्यते, स च न साम्प्रदायिकः। 'एत' इतिकाशिकायामधिकः पाठो दृश्यते, मूलं मृग्यम्॥

**प्रत्यवरोहिणी**। ओषधिभेदः। टित्त्वान्ङीप्प्राप्तः। ईकारान्तपाठस्तु पुंवद्भावनिषेधाय। प्रत्यवरोहिणीभार्यः। **सेवन**। सेवनी। सेचन इतिपाठे–सेचनी। **गणरत्ने** प्रसादे च नास्य पाठो दृश्यते। काशिकायां सेवन इति, मुद्रितगणपाठे सेचन इति दृश्यते, तदनुरोधाव्याख्यातम्। **सुमङ्गलादिति**। सुमङ्गलात्सञ्ज्ञायां ङीष्स्यादित्यर्थः। सुमङ्गली काचित्। केवलमामकेत्यादिना ङीपि प्राप्ते। तद्वचनात्पक्षे ङीवपि। **पण्डर**। 'पण्डरी। पण्डते याति मनोऽस्मिन् पण्डरः (वर्णविशेषः श्वेतः) तद्योगात्**पण्डरी**–पटी'ति **गणरत्ने**। अण्डरेति तु मुद्रितः पाठः। काशिकायां प्रसादे च नैतत्पठ्यते। **सुन्दर**। सुन्दरी। **अस्मिन् रतिश्रमजितश्च सरोजवाताःस्मर्त्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः**। नित्यस्त्रीविषयत्वाज्जातिलक्षणङीषोऽप्राप्तेरत्र पाठः। गुणवचनात्तु शोणादिपाठाद्वा ङीष्। 'सुन्दरीणां सुन्दरा गिरः' इति। भोजस्तु 'सुन्दर्यो गिर' इत्येव भवतीत्याहेति **गणरत्नकृत्**। **मण्डल**। **मण्डली**–संहतिर्देशश्चतुरस्रता च। **मञ्जर**। **मञ्जरी**–वल्लरिः। **मन्दरेति** वा **मन्थरे**ति मुद्रितः पाठः। [मन्थरी मन्दरी]। **मण्डक**। **मण्डकी**। [मङ्गलेति तु मुद्रितःपाठः। मङ्गली]। **काशिकायां** नैतौ दृश्येते। **पट**। **पटी**–शाटी। **पिण्ड**। **पिण्डी** मदनफलम्। **विट**। **विटी** काचित्। **उर्द**। **उर्दी**–विमानम्। ऊर्दीति क्वचित्। **गूर्द**। गूर्दी। **कूर्दीत्यपि काशिकायामधिकं** पठ्यते। **शम**। **शमी**–सक्तुफला। पिप्पल्यादावग्रेस्य पाठादिह पाठो न स्यात्। **सूद**। सूदते इति **सूदी** काचित्। '**सूर्द**'इति **शाकटायनप्रसादौ**। **पाण्ड**। पाण्डी। 'पाण्डोरपत्यं स्त्री पाण्डीत्येके। 'पाण्ट। पाण्टी

1 'प्रत्यग्रोहिणी'। २ 'सेवन'। ३ 'मञ्जर'। 'मन्दर'। ४ 'मण्डक'।

पाण्ट [ भाण्डल ] भाण्ड [ लोहाण्ड ] कदर कन्दल कदल[2] तरुण तलुन कल्माष [ वृहत् महत् ] [ सोम[1] ] सौधर्म । रोहिणी नक्षत्रे । रेवती नक्षत्रे । विकल निष्कल पुष्कल । कटाच्छ्रोणिवचने । पिप्पल्यादयश्च । पिप्पली हरीतकी कोशातकी शमी वरी[3]

पिच्छिका' इति **वर्द्धमानः** । **भाण्ड** । भाण्डी । लोह इवाण्डमस्याः लोहाण्डी नाम पक्षिविशेषः । '**लोहाङ्ग** इतिपाठः स्यात् । **लोहाङ्गी** नाम लोहवद्धा यष्टिः (लुहांगी) इति तु **गौडाः** । '**लोफाण्ट**' इत्यपि क्वचित्पाठः । [ **दर्दूर** इत्यपि **प्रसादे** पाठः ] ।

**कदर** । **कदरी**—वृक्षविशेषः । कन्दर इति काशिकापाठः । **कन्दरी**=गुहा । 'दरी तु कन्दरो वा स्त्री' इत्यमरः । अमरटीकायान्तु—'स्त्रियां टाप् । कन्दरा । तथा च 'कन्दरासु तरुणीरिह नयति रविः' इतिमाघः' इति मुकुटः । एवञ्च कन्दर इति नपाठः, किन्तु कदरेत्येव पाठ इति **गौडाः** । **कन्दल** । 'कलध्वनौ कन्दलीतु मृगगुल्मप्रभेदयो'रिति मेदिनी । **कदल** । केन वायुना दल्यते इति—**कदली**—मोचा, करिपताका च । 'रम्भावृक्षे च **कदली** पताकामृगभेदयोः इति मेदिनी । **कदलकन्दलशब्दौ** गौरादी इति व्याख्या**सुधाकारः** । **तरुण** । **तरुणा**—सुरा । **तलुन** । **तलुनी**—सुरा । तरुणतलुनयोर्गौरादिषु पाठान्ङीव्ङीषोः पर्यायो वोध्यः । स्वरे भेदः । 'युवतिवाचिनस्तु वयस्यचरमइतिङीपि सिद्धे पुनरिहपाठो ङीपा ङीपो वाधाऽभावाय । स्वरेभेद' इति **नागेशः** । **कल्माष** । कल्माषी=चित्रवर्णा । **वृहत्** । वृहती । **महत्** । महती । उगित्त्वान्ङीप्राप्तः । वृहन्महतोरिह पाठो व्यर्थ इति **हरदत्तदीक्षितनागेशाः** । **सौधर्म** । शोभनो धर्मोऽस्य सुधर्मा, सुधर्मणोऽपत्यं स्त्री सौधर्मी । ऋष्यण् । टिलोपः । अणिञोरिति ष्यङ् प्राप्तः ।

**विकल** । विकली । **निष्कल** । निष्कली । **पुष्कल** । पुष्कली । विकलनिष्कलशब्दौ जनपदवाचिनौ स्त्रीविषयाविति शाकटायनः । विकलनिष्कलपुष्कलशब्देभ्यो वनस्पतिवृत्तिभ्यो रूढेभ्य एवाऽयं ङीष् । अन्यत्र तु विगता कला यस्याः सा विकला, निष्कला, पुष्कला धनसम्पत्तिरित्यादि प्रयोगाः । **कटादिति** । श्रोणिवाचकात्कटशब्दान्ङीषित्यर्थः । **कटी** । कटाऽन्या । **पिप्पली**—कणा । **हरीतकी**—पथ्या । **कोशातकी**—पटोली (तरोई) । **शमी**—सक्तुफला । **वरी**—शतावरी । **करीरी**—हस्तिदन्तमूलम् । 'शरी' इति मुद्रिते 'शरारी' इति च प्रसादे पाठः । **शरारी**—पक्षिभेदः । 'आडिः शरारी वरटी गन्धोली वानरी कर्पी' इति **रत्नकोशः** । **पृथिवी**=धरित्री । 'पृथेः षिवन् संप्रसारणं चे'ति षित्त्वादेव ङीषि सिद्धे ङीष्प्रत्ययान्तस्येह पाठः पुंवद्भावनिवृत्तये इत्येके । स्त्रीविषयत्वात

१ अस्य पाठो न प्रामाणिकः । २ 'कदली' । ३ 'करी' ।

करीरी पृथिवी क्रोष्ट्री मातामह पितामह। इति गौरादिः।

पुंवद्भावप्राप्तिश्चिन्त्येति हरदत्तः। अस्मादेवाऽनित्यः षितां ङीषिति, तेन दंष्ट्रेत्यत्र न ङीषिति तु परे। **क्रोष्ट्री**—जम्बुकी। **मातामही**=मातुर्माता। **पितामही**—पितुर्माता। इह केषांचिदजातित्वात्केषां चित्स्त्रीविषयत्वादप्राप्ते पाठः। आकृतिगणोऽयम्। तेन देवदालीपटोलीत्यादयः। अथ गणरत्नमहोदधेः सङ्ग्रहश्लोका लिख्यन्ते—

गौराऽरीहण-खार-कर्कर-चरा[1]ः सारङ्ग-शृङ्गा-ऽऽढका-
द्रोणा-ऽलिन्द-वराह-बिम्ब-बदरा लोहाण्ड-पौण्टौ[2] पुटः।
नाटः पिण्ड-सुपाट-चेट-वरटा मूलाट-सूपा-ऽऽरटाः,
शूर्पा-ऽऽसन्द-नदाः पितामह-महौ मातामहो मातलः॥ १॥
कदर-कदल-सूचा मण्डलो मण्डकश्च,
प्लव-भष-कृप-भङ्गा यूप-तर्कार-मत्स्याः।
गवय-मुकय-गाहा मेध-शर्कार-पुत्राः,
शबल-गडुल-गूर्दाः सूद-कल्माप-देवाः॥ २॥
उभय-हय-मनुष्याः कुम्भ-दासौ पिशङ्गः,
कुवल-हरिण-यूथाः शूप-मेथौ गुडूचः।
भमर-पिठर-सूर्माः पिप्पली वैजयन्तो,
विकल-मठ-करीरी-केतका-ऽऽस्थान-चोराः॥ ३॥
द्रुण-विट-सरसा-ऽऽयःस्थूण-सौधर्म माचाः,
पटल-लवल पादा, वल्लका-ऽऽलम्ब-नाचाः।
भतस-पृथिव-भङ्गाः कन्दला-ऽऽरट्टि-दोट्टाः,
शम-तम-कुट-पेटा मञ्जरी निष्कलश्च॥ ४॥
ऋष्यो बन्धक-धातका-वनडुही-शष्कण्ड-कोशातका-,
ऽऽनङ्गाही-बृस-वेतसाः पट-नट-क्रोष्ट्र्योकणाः-काकणः।
आलक्ष्या-लजि-भिक्षुको-र्द-सुपवा औद्गाहमानिर्गरो,
गायत्र्या-मलकौ हरीतक-शचा-वालब्धि-मांसौ तरः॥ ५॥
कुसुम्भ-सुन्दरौ पूयः शकुली देहलस्तटः।
तापसोऽथ सिनीवालः पूल-सल्लक-गौतमाः॥ ६॥

१ 'वराः'। २ 'पाण्डौ'।

अथ बह्वादिगणः। बहु पद्धति अञ्चति अङ्कति अंहति वहति शकटि (शकंति)। शक्तिः शस्त्रे। शारि वारि राति [राधि शाधि] अहि कपि यष्टि मुनि। इतः प्राण्यङ्गात्। क्तदिका-राद्क्तिनः। सर्वतोऽक्तिन्नर्थादित्येके। चण्ड अराल कृपण कमल विकट विशाल

---

कटेट-भौलिङ्गथ-धिकार-देहा गवादनो-द्वाहन-तेजनाः स्युः।
आपच्चिको भौलिकि-भौरिकी च काकादनः प्रत्यवरोहिणी च ॥ ७ ॥
बर्बर-दाडिम-पनसास्तरुण-तलुना-ऽऽग्रहायणी-बन्दाः ।
पण्डर-पुष्कर-लवणाः पिङ्गल-मुसलौ विभीतको नन्दः ॥ ८ ॥

अत्र श्लोकेषु अपाणिनीया अपि बहवः शब्दा गणरत्नकृता नानाव्याकरणानुरोधेन संगृहीतास्ते आकृतिगणत्वाद्व्याकरणान्तरीयतया वा नेयाः। इति गौरादिगणः।

---

अथ बह्वादिगणः। बहु। बही बहुः। पद्धति -पद्धती- मार्गः। (पगडण्डी)। अञ्चतिः अञ्चती-अग्निः (आंच)। अङ्कतिः—अङ्कती—अग्निः। अंहती अहतिः। 'अंहितिर्यागरोगयोः' इति हैमः। वहतिः—वहती—वायुः। शकटिः शकटी—गन्त्री (गाडी)। शस्त्रे—शक्तिः शक्ती। (सांग)। शस्त्रे किं ?—शक्तिः सामर्थ्यम्। 'शक्तिः, शस्त्री'ति पाठे तु—शस्त्रिः शस्त्री—क्षुरिका। शारिः—शारी—क्रीडासाधनम् (स्यार—मोहरा)। वारिः वारी—गजबन्धनी। रातिः—दानम्। (गतिः गती। राधि शाधीति क्वचित्पाठः)। (सनिरिति च क्वचित्। सनिस्त्व-ध्येषणेत्यमरः)। अहिः—अही—सर्पिणी। कपिः कपी—वानरी। यष्टिः यष्टी—लगुडः। मुनिः मुनी। अथ यथोत्तरमधिकशब्दसङ्ग्रहार्थं गणसूत्रत्रयम्—इतः प्राण्यङ्गा-दित्यादि। इकारान्तात्प्राण्यङ्गवाचिनो वा ङीष्। धमनिः धमनी—नाडी। क्तदिति। क्तिन्वर्जितात्क्तदिकारान्तात् वा ङीष्। रात्रिः रात्री। धमनिः धमनी। सर्वतोऽक्तिन्न-र्थादित्येके। शकटिः शकटी। अक्तिन्नर्थादितिकिम्—'आक्रोशे नञ्यनिः'—अजननिः। चण्ड। चण्डी चण्डा—परुषा। अराल। अराली अराला—कुटिलभूमिः। कृपण। कृपणी कृपणा स्त्री। कमल। कमली कमला नाम काचिदिति गणरत्ने। कोमलेति-स्यादिति गौडाः। विशाल। विशाला विशाली कीर्त्तिः। विकट। विकटी

---

१ अस्य पाठोऽप्रामाणिकः।

विशङ्कट[1] भरुज ध्वज। चन्द्रभागान्नद्याम्। ( चन्द्रभागा नद्याम् ) कल्याण उदार पुराण अहन्। इति बह्वादिः।

अथ क्रोडादिः। क्रोड उखा[2] खुर शिखा गल वाल शफ गुद। आकृतिगणोऽयम्।

---

विकटा-रचना। **विशङ्कट**। विशङ्कटी विशङ्कटा-रथ्या। **विशङ्कटो**-विशालः। **भरुज**। **भरुजी भरुजा** स्नेहमृष्टास्तण्डुलाः ( भूजा )। **ध्वज**। **ध्वजी ध्वजा**-पताका। **चन्द्रभागान्नद्यामिति**। चन्द्रभागी चन्द्रभागा नदी। अन्यत्र चन्द्रभागा देवता स्त्रीवा काचित्। '**चन्द्रभागा नद्या**'मिति पाठे-चन्द्रभागा नदी। अन्यत्र चन्द्रभागा वनराजिः। केचित्तु अन्यत्र चन्द्रभागी चन्द्रभागेति द्वयं भवतीत्याहुः। 'चान्द्रभागादनद्या'मिति तु भोजः। चान्द्रभागा नदी। अन्यत्र चान्द्रभागी चान्द्रभागा। **चान्द्रभागान्नद्या**मित्यन्ये पठन्ति। **कल्याण**। कल्याणी कल्याणा कथा। **उदार**। उदारी उदारा सूक्तिः। **पुराण**। पुराणी पुराणा-छाया। **अहन्**। दीर्घाह्नी दीर्घाह्ना शरत्। 'अह्नी' 'अह्ना' इति तु अहन्शब्दस्य केवलस्य स्त्रियामसम्भवात्तदन्त उदाह्रियते। 'अह्नी' 'अह्ना' इति तु केवलेऽपि कश्चिदुदाहरति। बहुशब्दो गुणवचन एव, तस्येह पाठ उत्तरार्थइति **काशिका**।

इति बह्वादिगणः।

**अथ क्रोडादिगणः**। **क्रोड**। 'अश्वानामुरः क्रोडा'। क्रोडशब्दः स्त्रियां, 'विष्ठा मञ्जिष्ठा काष्ठे'त्यादि **लिङ्गकारिका**पाठसामर्थ्यात्। 'न ना क्रोडं भुजान्तर'मिति **रत्नमतिस्तु** कल्याणः क्रोडो यस्या इति विगृह्णन्नस्य पुंस्त्वं प्रकटयति। कल्याणी क्रोडा यस्याः सा कल्याणक्रोडा गौः। इतोऽग्रे काशिकादौ 'नख' इति पठ्यते। कल्याणनखेत्युदाहृतं च, तन्न युक्तम्, नखमुखात्सञ्ज्ञायामिति प्रतिषेधात्, असंज्ञायां ङीषन्तत्वात्। **खुर**। कल्याणः खुरोऽस्याः कल्याणखुरा। 'शिखा' इति वा, 'शाखा' इति वा क्वचित्पाठः। '**उखा**' इति पाठ इति **गणरत्नकृत्**। उत्खनतीति **उखा**-स्फिक्। ( 'फींच' 'नितम्बभाग' )। श्रीमत्युखा यस्याः सा श्रीमदुखा। गोख इति पाठ इति शाकटायनः। कल्याणो गोखो यस्याः सा कल्याणगोखा। **वाल**। कल्याण-वाला। **शफ**। पवित्रशफा। **शफः**। खुरः। **गुद**। कल्याणो गुदोऽस्याः कल्याणगुदा। 'कल्याणं गुदं यस्या' इति तु शाकटायनादयः। एवं-मृणालभुजा। उन्नतघोणा। किस-लयकरा। इत्यादि। आकृतिगणश्चायं। तेन शोभनो गलोऽस्याः सुगला। सुभगा। सुरागे-त्यादि सिद्धम्। 'सुरङ्गा' 'सुभगा' 'सुमङ्गला' प्रभृतयोऽपि च बोध्याः। सङ्ग्रहश्च **गणरत्ने**-

---

१ विशङ्कटस्थाने 'विकट' शब्दः शब्दकौस्तुभे दृश्यते। २ 'नख'।

तेन भग (गल) राग इत्यादि। इति क्राडादिः।

अथ शार्ङ्गरवादिः। शार्ङ्गरव कापटव (वाहतव) गौग्गुलव ब्राह्मण वैद गौतम कामण्डलेय ब्राह्मणकृतेय [ आतिथेय ] आनिधेय आशोकेय वात्स्यायन मौञ्जायन [२]कैकसेय काप्य (काव्य) शैव्य एहि पर्येहि आश्मरथ्य औदपान अराल चण्डाल वतण्ड। भौगवद्गौरिमतोः

क्रोड-बाल-गला भाल-भगो-खाः खुरसंयुताः।
शफो भुजो [१]गुदं घोणा करौ क्रोडादिनामनि॥ १॥

"क्रोडा बालखुरोखाः शफो गुदं भगगलौ च क्रोडादयः" इति शब्दकौस्तुभे।

इति क्रोडादिः।

**अथ शार्ङ्गरवादिगणः। शार्ङ्गरव।** [३]शृङ्गरोरपत्यं स्त्री शार्ङ्गरवी। तस्यापत्यमित्यण्। टित्त्वान्ङीप्प्राप्तस्तं बाधित्वा परत्वाज्जातिलक्षणो ङीष्प्राप्तस्तं बाधित्वाऽनेन ङीन्। नित्त्वादाद्युदात्तः, ङीषि तु प्रत्ययस्वरेणान्तोदात्तः स्यात्। **कापटव।** कपटोरपत्यं स्त्री कापटवी। **गौग्गुलव।** गुग्गुलोरपत्यं स्त्री गौग्गुलवी। **ब्राह्मण।** ब्रह्मणोऽपत्यं स्त्री ब्राह्मणी। **वैद।** विदस्यापत्यं स्त्री—वैदी। 'अनृष्यानन्तर्ये' इत्यञ्। जातिलक्षणो ङीष्प्राप्तः। **गौतम।** गोतमस्यापत्यं स्त्री गौतमी। ऋष्यणन्तः। **कामण्डलेय।** कमण्डलोरपत्यं स्त्री कामण्डलेयी। 'चतुष्पाद्भ्यो ढ'ञिति ढञ्। 'ब्राह्मणकृतेय। आतिथेय। आङ्गारकेय। एते शुभ्रादिढगन्ताः' इति कौस्तुभे। ब्राह्मणकृतस्यापत्यं स्त्री ब्राह्मणकृतेयी। अतिथेरपत्यं स्त्री आतिथेयी। अङ्गारकस्यापत्यं स्त्री आङ्गारकेयी। आङ्गारकेयस्थाने आशोकेय इति मुद्रितो गणपाठः। 'ब्राह्मणकृतेय, आनिचेय, आनिधेय, आशोकेय इतिढगन्ता' इति तु वृत्तौ पाठः। अशोकाया अपत्यं स्त्री आशोकेयी। **वात्स्यायन।** वत्सशब्दाद्गर्गादियञ्। ततो यूनि यञिञोश्चेति फक्। एतत्पाठसामर्थ्यादेव स्त्रियामपि युवसञ्ज्ञा, गोत्रएव वा प्रत्ययद्वयम् इति **कौस्तुभे।** वत्सस्य युवापत्यं गोत्रापत्यं वा स्त्री—वात्स्यायनी। **मौञ्जायन।** मुञ्जशब्दान्नडादित्वात्फक्। मुञ्जस्य गोत्रापत्यं स्त्री मौञ्जायनी। एतौ जातिवचनौ। **कैकसेय।** कीकसाया अपत्यं स्त्री-**कैकसेयी** राक्षसी। कीकसा हि राक्षसमाता। शुभ्रादित्वाड्ढक्। **काप्य। शैव्य।** कपेरपत्यं स्त्री काप्यी। शिवेरपत्यं स्त्री शैव्यी। कपिशिविभ्यां वृद्धेत्कोसलाजादाञ्ञ्यङिति ञ्यङि यङश्चाबिति चाप्प्राप्नोतीति ङीन्विधीयते। काव्येतिकाशिकाधृतः पाठः। **एहि। पर्येहि।** ईह चेष्टायामित्यस्मादाङ्पूर्वा-

१ 'गुदः' इति गणरत्नपाठः। 'गुद'मिति शब्दकौस्तुभसंमतः पाठः। २ 'कैकसे' 'कैकेय' पा०। ३ अयं गणो बह्वादिना सह भ्रान्त्याऽधुनातनेषु गणपाठेषु मुद्रितो दृश्यते।

सञ्ज्ञायां। घादिषु नित्यं ह्रस्वार्थम्। नृनरयोर्वृद्धिश्च। इति शार्ङ्गरवादिः।

अथ शकन्ध्वादिः। शकन्धुः कर्कन्धुः कुलटा। सीमन्तः केशवेशे। हलीषा मनीषा लाङ्गलीषा पतञ्जलिः। सारङ्गः पशुपक्षिणोः। इति शकन्ध्वादिः।

अथ क्षिपकादिः। क्षिपका ध्रुवका चरका सेवका करका चटका

त्पर्याङ्पूर्वाच्च सर्वधातुभ्यइति इन्प्रत्ययः। अत्र कृदिकारादिति ङीष्प्राप्तः। एहेरपत्यं स्त्री–एही। पर्येहेरपत्यं स्त्री-पर्येही। **आश्मरथ्य**। अश्मरथशब्दो गर्गादियञन्तः। अश्मरथस्य गोत्रापत्यं स्त्री–**आश्मरथ्यी**। **औदपान**। उदपानाज्जलाशयादागता स्त्री औदपानी। शुण्डिकादित्वादण्। **अराल**। **चण्डाल**। अनयोरसर्वलिङ्गत्वाज्जातित्वमिति-ङीष्प्राप्नोति। अराली। चण्डाली। **वतण्ड**। गोत्रत्वाज्जातित्वेन ङीषि प्राप्ते ङीन्विधीयते। वतण्डस्यापत्यं स्त्री–वतण्डी। '**वतण्डाच्चे**'तियञो 'लुक्स्त्रिया'मिति लुक्।

**भोगवद्गौरिमतोः**[1]। भोगवती। गौरिमती। उगित्त्वान्ङीप्प्राप्तः। ननु चेमावाद्युदात्ताविति ङीन्ङीपोर्न विशेषोऽत आह–**घादिष्विति**। भोगवतितरेत्यादौ नित्यं ह्रस्वार्थमित्यर्थः। अन्यथा 'उगितश्चे'ति तत्र ह्रस्वविकल्पः स्यात्। उगितः परा या उगिच्छब्देन विहिता नदीति तदर्थादित्याशयः। **नृनरयोरिति**। नृत्वजातिविशिष्टा नरत्वजातिविशिष्टा वा स्त्री नारी। **इति शार्ङ्गरवादिगणः**।

**अथ शकन्ध्वादिः**। **शकन्धुः**। शकानां देशविशेषाणामन्धुः कूपः–शकन्धुः। **कर्कन्धुः**। कर्काणां श्वेताश्वानामन्धुः–कर्कन्धुः। **कुलटा**। कुलान्यटतीति कुलटा–व्यभिचारिणी। **सीमन्तः**-केशवेशः। सीमप्रदेशस्तु सीमान्तः। **हलीषा**। हलस्य ईषा दण्डः–**हलीषा**। मनस ईषा–**मनीषा**–बुद्धिः। लाङ्गलस्य हलस्य ईषा–दण्डः–**लाङ्गलीषा**। पतन्त्यञ्जलयो यस्मिन् असौ **पतञ्जलिः**=मुनिः। पशुः पक्षी च–हरिणश्चातकश्च–**सारङ्गः**। अन्यत्र तु **साराङ्गो**–दृढाङ्गः। **इति शकन्ध्वादिगणः**।

**अथ क्षिपकादिगणः**। **क्षिपका**। क्षिपतीति क्षिपका–आयुधम्। अज्ञाता क्षिपा क्षिपका वा। **ध्रुवका**। ध्रु विधूनने, इगुपधलक्षणः कः। ततोऽज्ञाताद्यर्थे कः। ध्रुवतीति **ध्रुवका** पात्रभेदः। ( 'ध्रुवारा' 'दूध दूहने का वर्तन विशेष' )। अज्ञाता ध्रुवा ध्रुवका–इतिवा। **चरका**। चरतीति चरका। अज्ञाता चरा चरका इतिवा। योगिनीभेदः। **सेवका**। कुत्सिता सेवा सेवका। **करका**–वर्षोपलः। ( 'ओला' 'पत्थर' )। 'तान् कुर्वीथास्तुमुलकरकावृष्टिहासावकीर्णान्'। केचित्तु 'कमण्डलौ च करक' इति कोशात् करकशब्दः पुंस्येवेत्याहुः। **चटका**। चटति भिनत्तीति **चटका**–कलविङ्कः। ( चिडिया )।

[1] भोगशब्दस्य घञन्तत्वाद्गौरशब्दस्य च इञन्तत्वान्नित्यादिरित्याद्युदात्तत्वेति कौस्तुभकृतः।

अवका लहका अलका कन्यका ध्रुवका ऐरका। क्षिपकादिराकृतिगणः।

अथाहरादिः। अहर् गिर् धुर्। इत्यहरादिः।

पति गण पुत्र। इति पत्यादिः।

अथ लोहितादिः। लोहित शंसित बभ्रु वल्गु मण्डु शङ्कु लिगु गुहुलु मन्तु मङ्क्षु अलिगु जिगीषु मनु तन्तु मनायी सूनु कथक कन्थक ऋक्ष तृक्ष (वृक्ष) (तनु) तरुक्ष तलुक्ष तण्ड वतण्ड कपि कत [कपि कत] कुरुकत अनडुह् कण्व शकल। इति लोहितादिः।

---

**अवका**-शैवालम्। **लहका**। **अलका** च नगरी। **कन्यका**-कन्या। **ध्रुवका**। ध्रुवतीति ध्रुवका पात्रादिकम्। **ध्रुव स्थैर्ये**। कुत्सिता ध्रुवा (गीतिभेद) वाः ध्रुवका। **एडका**-मेषी। (भेड)। आकृतिगणोऽयं। तेन **मेनका**। **दण्डका** (दण्डकारण्यं)। **पिप्पका**। **इष्टका**=मृच्चयः। (ईंट)। **रेवका**। **एरका धारका द्वारका**-प्रभृतयो ग्राह्याः। इति **क्षिपकादिगणः**।

अहरादिगणस्तु स्पष्टार्थ एव।

अथ-गर्गाद्यन्तर्गणो **लोहितादिः**। **लोहित**। लोहितस्यापत्यं स्त्री-लौहित्यायनी। एवमग्रेऽपि विग्रहः। **संशित**। सांशित्यायनी। **बभ्रु**। बाभ्रव्यायणी। **वल्गु** वल्गोरपत्यं स्त्री वाल्गव्यायनी। **मण्डु**। माण्डव्यायनी। **शङ्कु**। शाङ्कव्यायनी। **लिगु**। लैगव्यायनी। **गुहलु**। गुहलोरपत्यं स्त्री-गौहलव्यायनी। 'गुहुलु' इति मुद्रितगणपाठः। 'हल्गु' इति प्रसादे पाठान्तरम्। हाल्गव्यायनी। **मन्तु**। मान्तव्यायनी। **मङ्क्षु**। माङ्क्षव्यायणी। **अलिगु**। आलिगव्यायणी। **जिगीषु**। जैगीषव्यायणी। **मनु**। मानव्यायनी। **तन्तु**। तान्तव्यायनी। **मनायी**। मानाय्यायनी। **सूनु**। सौनव्यायनी। **कथक**। काथकायनी। अस्य गणरत्ने पाठो नास्ति। **कन्थक**। कान्थक्यायनी। अस्य पाठः क्वचिन्न। **ऋक्ष**। आर्क्ष्यायणी। रैक्ष्यायणीत्यन्ये। **वृक्ष**। वार्क्ष्यायणी। **तनु**। तानव्यायनी। **तरुक्ष**। तारुक्ष्यायणी। **तलुक्ष**। तालुक्ष्यायणी। **तण्ड**। ताण्ड्यायनी। **वतण्ड**। वातण्ड्यायनी। आङ्गिरसी तु-वतण्डी। **कपि**। काप्यायनी। **कत**। कात्यायनी। [**गणरत्ने**-**लतु**-लातव्यायनी। **सम्बु**। साम्बव्यायनी। **श्रुव**। श्रौव्यायणीत्यधिकं पठ्यते]। **कुरु**। कौरव्यायणी। **शकल**-शाकल्यायनी॥ इति **लोहितादिगणः**॥

---

१ एरका—तृणभेदः। (ऐरण)।

अथ कस्कादिः। कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः [साद्यस्कीः] साद्यस्क्रः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् वहिष्पलम् (वर्हिष्पलम्) यजुष्पात्रम् अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः भास्करः अहस्करः। कस्कादिराकृतिगणः।

इति मध्यमपरीक्षाप्रथमखण्डोपयोगिनी गणरत्नकौमुदी *

**अथ–कस्कादिगणः।** **कस्कः।** कः क इति वीप्सायां द्विर्वचने–कस्कः। कुतः कुत आगत इत्यर्थे वीप्साद्विर्वचने तत आगत इत्यणि अव्ययानामिति टिलोपः। भ्रातुः पुत्रो भ्रातुष्पुत्रः। षष्ठीसमासे 'ऋतो विद्यायोनिसम्बन्धेभ्य' इति षष्ठ्या अलुक्। भ्रातृसुतः। शुनः कर्णः–शुनस्कर्णः। अतएव निपातनात् षष्ठ्या अलुक्। कुक्कुरकर्ण इत्यर्थः। केचित्तु शुनस्कर्ण इति वाक्य एव सत्वं, समासे तु श्वकर्ण इत्येव भवतीत्याहुः। **सद्यःकाल** इति वाक्ये सत्वम्। यद्वा सद्यः कालोऽस्येतिविग्रहः। 'सद्यस्कालं युयुत्सुभि'रित्युदाहरणम्। सद्यः क्रीणातीति सद्यस्क्रीः। सम्पदादित्वात् क्विप्। अस्य पाठः क्वाचित्कः। सद्यः क्रियते इति सद्यस्कः, सद्यस्क एव **साद्यस्क्रः**=क्रतुः। करोतेः कर्मणि कप्रत्ययः। प्रज्ञादित्वात्स्वार्थेऽण्। यद्वा सद्यस्क्रियोऽपत्यं साद्यस्क्रः। कान्कानिति वीप्सायां द्वित्वम्। काँस्कान्=कान्कानित्यर्थः। सर्पिषः कुण्डिका–**सर्पिष्कुण्डिका**। घृतपात्रमित्यर्थः। धनुषः कपालं **धनुष्कपालम्**। कोदण्डदण्ड इत्यर्थः। कोदण्डखण्ड इत्यर्थो वा। कपालस्य वहिः **वहिष्कपालं**–कपालवहिर्भाग इत्यर्थः। राजदन्तादित्वाद्वहिश्शब्दस्य पूर्वनिपातः। क्वचित्तु वहिष्पूलमिति वर्हिष्पूलमिति वहिष्पलमिति वा पाठः। तत्र–**वहिष्पलं**=पलादधिकमित्यर्थः। **वर्हिष्पूलं**। कुशपूलमित्यर्थः। पलमिति पाठे पलं मानभेदः। (**पलं**=छटांक)। यजुषां पात्रं यजुष्पात्रम्। यजुर्वेदाधिकारीत्यर्थः।

**अयसः**=लोहस्य आकर्षकः **कान्तः**—**अयस्कान्तः**=लोहविशेषः। (चुम्बक पत्थर)। **'स चकर्ष परस्वं तदयस्कान्त इवायसम्'**। अयसः काण्डं, प्रशस्तं अयो वा–अयस्काण्डः। घनीभूतं तमः। अयस्काण्डमिति वा पाठः। काण्डशब्दः पुंसि क्लीबे च। 'क्षमातमस्काण्डमलीमसं नभः' इति माघः। मेदसो-वसायाः पिण्डः–**मेदस्पिण्डः**=वसागोलकम्। भासं करोति–तच्छीलः **भास्करः**=सूर्यः। अहः करोति तच्छीलः **अहस्करः**=सूर्यः। **आकृतिगण इति**। तेन–अयस्कुण्ड–दिवस्पतिप्रभृतयोऽपि ग्राह्याः। ❀ इति प्रथमखण्डोपयोगिनी गणरत्नकौमुदी ❀

१ 'सद्यस्करः।

❀ अथ ❀

श्रीगुरुप्रसादशास्त्रिसङ्कलिता सङ्क्षिप्ता

# सरलफक्किकाकौमुदी

[ तत्र पङ्क्तिलेखनप्रकारः ]

**(प्रश्नः)–हलन्त्यमित्यत्र कथमन्योन्याश्रयदोषप्रसङ्गः कथं च स दोषो दीक्षितैर्निराकृत इति स्पष्टं लिख ।**

वाक्यार्थज्ञाने पदपदार्थज्ञानस्य कारणतया हलन्त्यमित्यस्य वाक्यार्थबोधकाले उपदेशादिपदार्थज्ञानेऽपि हल्पदार्थस्याऽज्ञानेन तज्ज्ञानायादिरन्त्येनेत्येतद्वाक्यार्थबोधस्याऽऽवश्यकता, आदिरन्त्येनेत्यस्य वाक्यार्थबोधे चेत्पदार्थज्ञानस्यावश्यकत्वेन तज्ज्ञानाय हलन्त्यसूत्रवाक्यार्थज्ञानस्य आवश्यकतेति हलन्त्यमादिरन्त्येनेत्यनयोः परस्परापेक्षत्वादन्योन्याश्रयः । न च हलन्त्यमित्यस्य हल्सूत्रान्त्यमिदित्यर्थ इति हल्पदार्थज्ञानस्याऽऽदिरन्त्येनेतिसूत्रीयवाक्यार्थबोधं विनाऽपि सम्भवान्नान्योन्याश्रय इति वाच्यं, हलन्त्यमित्यस्य हल्सूत्रान्त्यमिदित्यर्थे तवर्गसकारमकाराणामित्संज्ञाऽप्रसक्त्या तन्निषेधकस्य 'न विभक्तौ तुस्माः' इत्यस्य वैयर्थापत्त्याऽन्त्यं हलिदित्यस्यर्थस्यावश्यकत्वेन हल्पदार्थज्ञानायादिरन्त्येनेत्येतद्वाक्यार्थबोधावश्यकतायाः सत्त्वेनान्योन्याश्रयतादवस्थ्यात् । एवञ्च लकारे इत्संज्ञामबोधयित्वा हलामित्सञ्ज्ञाबोधनं सूत्रकारस्याऽयुक्तमिति शङ्का । अन्योन्याश्रयपरिहारस्तु–वार्त्तिककृता 'लश्चेति वक्तव्य'मिति रीत्या कृतः । भाष्यकारैस्तु तन्त्रेणान्योन्याश्रयं परिहृत्य-तद्वार्त्तिकं खण्डितम् । तन्त्रत्वं च सकृदुच्चरितत्वे सत्यनेकार्थविषयकबोधजनकत्वमेव । तदेवं सकृदुच्चरिताद्धलन्त्यमितिसूत्राद्द्विधा बोध इति भाष्याशयः । सूत्रकृता त्वेकशेषेण-सूत्रमिदं पठितमन्योन्याश्रयपरिहाराय । हल् हल् च हल्, अन्त्यश्च अन्त्यं च अन्त्यम् । नपुंसकमनपुंसकेनेति नपुंसकैकशेषः । दीक्षितचरणैस्तु हलन्त्यमित्यस्याऽऽवृत्तिः कृताऽन्योन्याश्रयपरिहाराय । आवृत्तौ मानञ्च 'न विभक्तौ तुस्माः' इति सूत्रम् । एवं च प्रथमस्य सूत्रस्य हलिति सूत्रेऽन्त्यमित्स्यादित्यर्थस्तेन लस्येत्त्वे कृते इत्पदार्थज्ञानादादिरन्त्येनेत्यनेन हल्प्रत्याहारः सिद्ध इत्यन्योन्याश्रयपरिहारः । प्रथमे सूत्रे हलः अन्त्य-

मिति षष्ठीसमासः। न च हलिति सूत्रेऽन्त्यमिति वृत्त्यनुरोधेन सप्तमीसमास एवेति वाच्यम्, शौण्डादिगणे पाठाऽभावाद्योगविभागस्यापि भाष्येऽदर्शनाच्च। न च सुप्सुपेति समासः, तस्याप्यगतिकगतित्वात्। एवं च वृत्तौ फलितार्थकथनमेव।

द्वितीयसूत्रस्य च –उपदेशेऽन्त्यं हलित्स्यादित्यर्थः। उपदेश आद्योच्चारणम्। उपपूर्वकदिशधातोरुच्चारणमर्थः, 'उपदिष्टा इमे वर्णा' इति भाष्यात्। उपेत्यनेन च आद्यत्वं गृह्यते, तच्च अज्ञातस्वस्वरूपज्ञापकत्वम्। अन्यथा वृद्धिरादैजित्यत्रैव स्यात्। योगिनां सर्वज्ञत्वादज्ञातेत्यादेः–अयोगिपुरुषाऽज्ञातस्वस्वरूपज्ञापकोच्चारणकर्मीभूतसमुदाय-निरूपितान्त्यविशिष्टा हकारादिलान्तसमुदायघटकवर्णा इत्पदप्रयोज्यबोधीयविषयताश्रया भवन्त्विति परिष्कृतोऽर्थस्तेन अइउणित्यादौ णादय इत इति संक्षेपः॥

**प्रत्याहारेष्वितां न ग्रहणमित्यत्र प्रमाणं दर्शय।** रप्रत्याहारसिद्ध्यवसरे रशब्देन रलयोर्बोध इत्युक्तं, तत्र टकारस्यापि मध्यगत्वाद्रटलानां ग्रहणं कथं नेत्यत उक्तं-**प्रत्याहारेष्विति।** न चात्र मानाऽभाव इति वाच्यम्, 'मुखनासिके'त्यादौ 'अनुनासिक' इत्यादि यणघटितनिर्देशस्यैव मानत्वात्, अन्यथा ककारेऽचि परत इकारस्य यणापत्तिः स्यात्। न च नासैव नासिका, स्वार्थे कः, नासिकामनुगतोऽनुनासिक इत्यत्रेको-ऽसवर्ण इति प्रकृतिभावे सति निर्देशः सूपपन्न एवेति वाच्यम्। ककारस्याच्त्वाद्यचि भमिति भत्वेन पदान्तत्वाऽभावात्। न च स्वादिष्विति पदत्वस्य भसञ्ज्ञया परत्वाद्बाधेऽपि प्रत्यय-लक्षणेन सुप्तिङन्तमित्यनेन प्राप्तस्य पदत्वस्य बहिर्भूताजिमित्तकतया बहिरङ्गा यचिभमिति भसंज्ञा बाधिका न स्यादिति पदत्वं सुलभमिति वाच्यम्। सिति चेति सूत्रसामर्थ्येन तद्बाधकताया अपि निर्विवादत्वात्। अन्यथा शुभंयुरित्यादौ सुप्तिङिति पदत्वस्य निर्बाधतया तेन पदत्वविधानं व्यर्थमेव स्यात्। ननु अच्त्वहल्त्वेतिधर्मद्वयानाक्रान्तप्रत्ययनिमित्ति-कैव भसंज्ञा, प्रकृते च ककारस्याऽच्त्वहल्त्वेत्येतद्धर्मद्वयाक्रान्तत्वेन भत्वस्य प्राप्त्यभावादनु-नासिक इतिनिर्देशे पदान्तत्वं सुलभमेवेतीकोऽसवर्ण इति प्रकृतिभावेन यणप्राप्तेरनुनासिक-इति निर्देशः सूपपन्न इति तत्कथं प्रमाणमिति चेन्न। अनुनासिकशब्दे हि नासिकाशब्द-स्य ण्वुलन्तत्वं नतु स्वार्थिककप्रत्ययान्तत्वं, 'घोणा नासा च नासिके'त्यमरे नासानासिका-शब्दयोः पाठेन तस्य ण्वुलन्तत्वमिति निर्णयात्। स्वार्थिककप्रत्ययान्तशब्दस्य पर्यायेषु पुनः पाठस्य कोशकृच्छैलीविरुद्धत्वात्। एवञ्च नासते इति नासिकेति ण्वुलन्तनासिका-शब्दस्य प्रत्ययस्थादितीत्त्वे कृते यणा भाव्यं। नह्यत्र पदत्वं येन प्रकृतिभावः सम्भवेत्, एवं च तत्र यणदर्शनात्प्रत्याहारेष्वितां न ग्रहणमिति ज्ञायते इति ग्रन्थकृदाशयः। परेतु

इत्त्वविधानसामर्थ्येनैव प्रत्याहारेष्विताामिति ज्ञाप्यते। तदेवं ककारस्यानच्त्वाद्यणप्रवृत्तिः। साक्षाद्यण्शास्त्रबाधापेक्षया एवं ज्ञापनस्यैवौचित्यादित्याहुः। अन्येतु इत्त्वविधानसामर्थ्या-दिकारस्येह यणभावेऽपि मूले 'नह्यत्र ककारेऽपरेऽच्कार्यं दृश्यते'इत्यस्य **अपरे**–अकारपरे ककारे परेऽच्कार्यं सवर्णदीर्घरूपं कार्यमित्यर्थ इति नासङ्गतिरित्याहुः। [ विस्तरस्तु फक्किकासर्वस्वेऽस्मद्विरचिते द्रष्टव्यः ]।

**तस्यादित इति सूत्रे ह्रस्वग्रहणं शाब्दबोधजनकं कस्मान्न भवति?। स्वरिते उदात्तानुदात्तयोश्च कीदृशो विभाग इत्यपि लिख।**

ननु तस्यादित इति सूत्रे तस्यशब्देन स्वरितस्य यथा बोधस्तथैव ह्रस्वपदेनापि कश्चिद्बोधो भवितुमर्हतीति चेन्न, ह्रस्वस्यार्धमर्धह्रस्वमित्येकदेशिसमासे ह्रस्वस्वरित-ग्रहणेऽपि दीर्घप्लुतस्वरितयोरग्रहणापत्तिः, अर्धं च तद्ध्रस्वं चेति भाष्यकृदुक्तकर्मधारयसमासे तु ह्रस्वप्लुतयोरग्रहणापत्तिस्तत्रार्द्धस्य ह्रस्वत्वाऽभावात्। अर्धह्रस्वश्चार्धह्रस्वश्चेत्येकशेषेण तु ह्रस्वदीर्घयोर्ग्रहणेऽपि प्लुतस्वरितस्याऽग्रहणापत्तिरित्यभिप्रेत्याह मूलकारः–**ह्रस्वग्रहणम-तन्त्रमिति**। बोधाऽजनकमित्यर्थः। एवञ्च ह्रस्वदीर्घप्लुतस्वरितेष्वर्द्धमुदात्तमर्द्धमनुदात्तं बोध्यम्। **नागेशभट्टास्तु** अर्धह्रस्वशब्दोऽर्धमात्रायां रूढ इत्यभिप्रयन्ति। तेन ह्रस्वदीर्घप्लुतेषु त्रिष्वपि आद्या अर्धमात्रैवोदात्ता, अवशिष्टा मात्राऽनुदात्ता। भाष्यमतेपींत्थ-मेव। मूलकृन्मते त्वर्धभाग उदात्तो, यथा दीर्घे एकमात्रा पूर्वोदात्ता, उत्तरैका मात्राऽ-नुदात्ता। प्लुते पूर्वा सार्धमात्रोदात्ता, अपरा सार्द्धमात्राऽनुदात्तेति सङ्क्षेपः।

**अ अ इत्यनेन कथमकारस्य संवृतत्वम्?। सूत्रे च कथं सन्धि-कार्याऽभावः?।**

अ अ इत्यत्र प्रथमोऽकारो विवृतप्रयत्नको लुप्तषष्ठ्यन्त उद्देश्यः। द्वितीयोऽकारश्च संवृतप्रयत्नो लुप्तप्रथमान्तो विधेयः। तदेवं विवृताकारमुद्दिश्य संवृताकारोऽनेन विधीयते। सूत्रेचाऽकः सवर्णे इति दीर्घाऽभावः, आद्याकारस्य विवृतत्वेन द्वितीयाकारस्य संवृतत्वेन-तयोः परस्परमसावर्ण्यात्। नच प्रक्रियादशायां विवृतत्वमेवेति वाच्यम्, एतदकारभिन्ने-ऽकारे एवैतन्नियमस्य प्रवर्त्तनं नत्वत्रेत्यभ्युपगमात्। नचाऽऽद्गुण इति गुणापत्तिरिति वाच्यं, 'विवृतोपदेशः कर्त्तव्य'इति भाष्येणाक्षरसमाम्नाये संवृतस्य पाठाऽभावस्य लाभात्। न चोद्देश्यगताकारेणाऽविधीयमानतयाऽष्टादशाकाराणां ग्रहणमितिवाच्यं, तुल्यास्यप्रयत्न-मित्यादौ दीर्घश्रवणाऽनुपपत्तेरिति सङ्क्षेपः।

**बाह्यप्रयत्नेषु अचां के प्रयत्नाः ?।**

खयां यमाः खयः ✕ क✕पौ विसर्गः शर एव चेति कारिकायामन्ये तु घोषाः स्युः संवृता नादभागिन इत्युक्तेः–(अन्येषां) खयादिभिन्नानामवशिष्टानामचां संवारनादघोषाः प्रयत्नाः। किञ्च–'अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृता' इत्यत्र यणश्चेति चकारेण अचां ग्रहणमित्यल्पप्राणप्रयत्नवन्तोऽप्यचः। एवञ्च संवारनादघोषाऽल्पप्राणप्रयत्नवत्त्वमचामिति लब्धम्। स्पष्टं चेदं भाष्यादाविति सङ्क्षेपः।

**'कति यमाः' इति सप्रमाणमुपवर्ण्यताम्। तल्लक्षणञ्च किम्?।**

'विंशतिर्यमा' इति सिद्धान्तः। 'वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये पूर्वसदृशो यमो नाम वर्णः प्रातिशाख्ये प्रसिद्धः' इति च यमलक्षणम्। 'पलिक्क्नी'त्याद्युदाहरणानि। यत्तु–पलिक्क्नीरित्यादिप्रयोगचतुष्टयप्रदर्शनेन, 'चत्वारश्च यमाः स्मृता' इति शिक्षाप्रमाणेन च चतुर्भिरेव यमैर्भवितव्यमिति, तन्न, वर्गेष्विति बहुवचननिर्देशात्। चत्वारश्चेति शिक्षावाक्यस्य लक्षणयाऽप्युपपत्त्या यमचतुष्ट्वे मानाऽभावात्। न च 'कुं खुं गुं घुं यमा' इति प्रातिशाख्येन सर्वादीनीतिवत् वर्गेष्विति बहुवचननिर्देशस्य यमगतचतुष्ट्वारोपेणोपपत्तौ 'चत्वार एव यमा' इति वाच्यम्। कुं खुं गुं घुं यमा इति सूत्रविवरणे एव 'विंशतिर्यमाः स्वरूपतश्च चत्वार' इति व्याख्यातत्वेन याञ्च्ना, मृड्ड्णाति, आर्त्त्नोत्, साध्नोति क्षुभ्नातीत्याद्युदाहरणदानाच्च यमचतुष्ट्वस्य निर्मूलत्वादिति सङ्क्षेपः।

**दधि हरतीत्यादौ यणादिकं विश्वपाभिरित्यत्र ढत्वञ्चापाद्य वारणीयम्।**

ननु यथा स्थानप्रयत्नसाम्यादकाराऽऽकारयोः सावर्ण्येन अकारेणाऽऽकारबोधे दध्यानयेत्यादौ यणादिकं सिध्यति, तथैवाऽकारहकारयोरिकारशकारयोरपि मिथः सावर्ण्येनाऽकारेण हकारस्य बोधाद्दधि हरतीत्यादौ यणादिना भाव्यमिति चेन्न, नाज्झलाविति सावर्ण्यनिषेधात्। नचैवं नाज्झलावित्यत्राऽच्पदेनाऽकारस्यैव ग्रहणेन आकारहकारयोः सवर्णसञ्ज्ञाया दुर्वारत्वेन विश्वपाभिः, वागाशीः, रमासु, दासीष्टेत्यादौ ढत्वपूर्वसवर्णषत्वघत्वापत्तिः। अवरकालत्वेन वाक्यापरिसमाप्तिन्यायेन चाणुदिदित्यस्याऽप्रवृत्तिः। वाक्यापरिसमाप्तिन्यायश्चेत्थम्, वाक्यार्थज्ञाने पदज्ञानं पदार्थज्ञानञ्च कारणमिति अणुदित्सवर्णस्य नाज्झलावित्यनयोर्वाक्यार्थबोधकाले 'वर्णानामुपदेशस्तावदुपदेशोत्तरकालेत्संज्ञा, तदुत्तरकाला अंज्झलादिप्रत्याहारसिद्धिस्तदुत्तरकाला प्रकल्प्य चापवादविषयमित्याद्यनुसारेण तुल्यास्येति सवर्णसंज्ञा, तदुत्तरकाला अणुदिदित्येन ग्राहकताशक्तिरित्येतेन समुदितेन

वाक्येनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नाऽपि स्वाङ्गे' इतीति वाच्यम् ,अवरकालत्वेन वाक्यापरिसमाप्तिन्यायेन ग्राहकशास्त्राऽप्रवृत्तावपि नाऽऽज्झलावित्यत्राकारस्याऽपि प्रश्लेषेणाऽदोषात् । प्रश्लेषे प्रमाणञ्च कालसमयवेलासु तुमुन्निति निर्देश एव । न चाऽऽकारप्रश्लेषेण पूर्वोक्तदोषाऽभावेऽपि प्लुताकारहकारयोः सावर्ण्यस्य दुर्वारत्वेन हे पि३पासो इत्यादौ गुरोरनृत इति पकारोत्तराकारस्य प्लुते कृते षत्वापत्तिरिति चेन्न, नाज्झलावित्यत्र प्लुताकारस्यापि प्रश्लेषात् । तत्र मानञ्चेषद्विवृतप्रयत्नं स्वीकृत्यैतत्सूत्रप्रत्याख्यानपरं भाष्यमेव । अन्यथा सूत्रारम्भे षत्वप्राप्तिस्तदभावे त्वप्राप्तिरिति फलभेदात्तत्प्रत्याख्यानस्याऽसङ्गतिः स्यादिति तत्त्वविदः । सूत्रे आश्च आश्चेति औ, आभ्यां सहित आसहितः, आसहितश्चासौ अचेत्याच्, आच्च हल्चेत्याज्झलौ इति मध्यमपदलोपी समास इति सङ्क्षेपः ।

**एचो द्वादशानाम् । तैनैचश्चतुर्विंशतेः संज्ञाः स्युरिति नापादनीयमिति फक्किका स्पष्टं व्याख्यायताम् ।**

ननु यथा ऋऌवर्णयोः सावर्ण्यान्मिथो बोधे त्रिंशतः संज्ञात्वं तथैव एकारैकारयोरोकारौकारयोश्च सावर्ण्यान्मिथो ग्रहणे चतुर्विंशतेः संज्ञात्वं प्रत्येकं सम्पद्येतेति चेन्न, तथा सत्येकारेणौकारग्रहणे, एचोऽयवायाव इत्यत्रैङोऽयवायाव इति न्यासेन निर्वाहे 'ऐऔ'-जिति सूत्रवैयर्थ्यापत्त्या तत्र सावर्ण्याऽभावात् ।

न चैङ इति न्यासे यथासङ्ख्याऽप्रवृत्तिरिति वाच्यं, संवृतस्य संवृतः, विवृतस्य विवृत इत्यादिसाधर्म्येण स्थानेऽन्तरतम इत्यनेनैव निर्वाहादिति भाष्ये स्पष्टत्वात् ।

न च वृद्धिरादैजित्येतदर्थमैऔजिति सूत्रमिति वाच्यम् । तत्रापि 'वृद्धिरादेङ् अचगुण'इति न्यासेनैव निर्वाहात्,वृद्धिरादैजिति पक्षेऽपि पञ्चानामेव वृद्धिसंज्ञात्वेन भेदाऽभावात्। नन्वेवमपि न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैजित्यर्थमैऔजितिसूत्रमिति चेन्न , तत्रापि स्वरूपत ऐ औ इति पाठेन निर्वाहात् । ऐ औजिति सूत्रपाठाऽपेक्षयाऽत्रार्द्धमात्रालाघवात् । न च स्वरूपज्ञानार्थमैऔजित्यावश्यकमिति वाच्यम् । पृथगनुबन्धारम्भसामर्थ्यादिवैचां परस्परं सावर्ण्याऽभावस्य ज्ञापनेनाऽदोषादित्यलम् ।

**अजुदित्सवर्णस्येति कुतो न सूत्रितमित्याशङ्क्य समाधेयम् ।**

ननु अणुदिदित्यत्राऽकाराद्यौकारान्तानां सर्वेषां यत्किञ्चित्सवर्णत्वाद्बोधे, हकारादीनां च सावर्ण्याभावादग्रहणेऽजुदित्सवर्णस्येत्येव सूत्र्यतामिति चेन्न । सानुनासिकनिरनुनासिकभेदेन यवलानां द्वैविध्यदर्शनेन तयोर्बोधार्थमण्ग्रहणस्यावश्यकत्वेन तथा न्यासस्य कर्त्तुमशक्यत्वात् । तेन सय्य्ँन्ताः सँव्वत्सरः यँल्लोकमित्यादौ त्रियकारकादीनि रूपाणि सिध्यन्तीति सङ्क्षेपः ।

**'विर्गच्छती'त्यत्रोपसर्गसञ्ज्ञां निरस्य निस्दुसोः पाठस्य फलंब्रूत ।**

प्रपरेत्यादौ 'वि' इत्यस्य पाठे पक्षिवाचिविशब्दस्यापि निपातत्वापत्तौ ततः सुब्लुगापत्तिः, तथा 'निस्' इत्यस्य सस्य रुत्वे 'नि'रित्येव रूपं लभ्यते, धातूनां सम्बन्धेऽपि निस्निरोः कार्य्ये विशेषाभावान्निरः पाठेनैव सिद्धे निस्दुसोः पाठः किमर्थः ? सान्तरान्तयोः प्रमाणञ्च किमिति प्रश्ने—

**उत्तरं**—प्र परेत्यादौ विशब्दस्य पाठे पक्षिवाचिविशब्दस्य निपातसंज्ञा न, किन्तु विशेषवाचिनो विशब्दस्यैव। प्रादय इत्यस्य 'असत्त्वे'इत्यनुवृत्त्या 'असत्त्वार्थविषयकबोधजनकाः प्रनिष्ठप्रथमावयवतानिरूपकसमुदायघटका निपातसञ्ज्ञका' इत्यर्थात् । एवञ्च पक्षिवाचिविशब्दस्य सत्त्ववाचित्वान्निपातत्वाऽभाव इति न कश्चिद्दोषः ।

निस् निर् दुस् दुर् इत्यादीनां निष्प्रणीतं, दुष्प्रणीतं, निष्कृतं, दुष्पीतमित्यादौ श्रवणे विशेषाऽभावेऽपि अयधातुना सम्बन्धे सति निर्दुरोर्निलयते, दुलयते इत्यत्र लत्वम् । निस्दुसोस्तु रुत्वस्याऽसिद्धत्वान्न लत्वमिति निरयते दुरयते इत्येव रूपमिति फलभेदात्प्रादिषु तयोर्भेदेन निर्देशः । रान्ते प्रमाणञ्च—इदुदुपधस्येति सूत्रे भाष्यमेव । तत्रहि 'नोपधाग्रहणेन विसर्जनीयं विशेषयिष्यामः, किन्तर्हि ? रेफसकाराभ्या'मित्युक्तम् । तत्र रेफसकारस्थानिकविसर्गस्येत्यर्थ इत्यभिप्रायः । तेन निस्निरोर्विसर्गोऽभिलक्ष्यते । किञ्च 'निरः कुषः' 'सुदुरोरधिकरणे' इत्यादिभी रान्तत्वम् । उक्तभाष्येण, 'निसस्तपता'वित्यादिसूत्रेण च तयोः सान्तत्वमपि ज्ञायते इति सङ्क्षेपः ।

इति सरलफक्किकाकौमुद्यां संज्ञाप्रकरणम् ।

**चेतेत्यत्र प्रमाणत अन्तर्यादकारः कस्मान्नेत्याशङ्क्य समाधीयताम् ।**

ननु चिधातोर्लुटि चि-ता इत्यत्र , लुडन्तस्तुधातोः स्तु-ता इत्यत्र च गुणे कर्तव्ये स्थानघटितधर्मप्रयोज्यसादृश्येन एकारौकारौ-प्राप्नुतः, प्रमाणघटितधर्मप्रयोज्यसादृश्येन एकमात्राकालिकत्वादकारः प्राप्नोति, एवञ्च पर्यायेण द्वाभ्यां भाव्यमिति चेन्न; 'यत्रानेकविधमान्तर्यं तत्रस्थानत आन्तर्य्यं बलीय' इति परिभाषया 'यत्रानेकविधधर्मप्रयोज्यसादृश्यं तत्र स्थानघटितधर्मप्रयोज्यसादृश्यं'बलव'दित्यर्थिकया एकारौकारयोरेव विधानात् । न चाऽस्यां परिभाषायां वीजाऽभाव इति वाच्यं, 'स्थानेऽन्तरतम' इत्यत्र 'स्थाने'इति विभक्तयोगस्य नियामकत्वेन प्रमाणत्वात् । तदर्थश्चेत्थं–'स्थाने' इति योगे 'ऽन्तरतम' इत्यस्य सम्बन्धे स्थानशब्दस्य ताल्वादिस्थानपरकत्वाद्यत्र सादृश्यं गृह्यते तत्र ताल्वादिस्थानेनेत्यर्थो जातः।

तत्र अस्यार्थस्य च 'अन्तरतम'इति योगेनैव सिद्धत्वात्सिद्धौ सत्यामारभ्यमाणो विधिर्नियमाय कल्पते इति न्यायेन 'स्थाने' इत्यस्य ताल्वादिस्थानेनैवेत्यर्थः सञ्जायते। एतन्मूलिकैव च सा परिभाषेति स्पष्टमन्यत्र । **इतिपरिभाषाप्रकरणम् ।**

## सुद्ध्युपास्य इत्यत्र यथासङ्ख्यसूत्रेण सिद्धिः कथं न ? ।

ननु इको यणचीत्यत्र इग्यणोः समसंख्याकत्वाद्यथासङ्ख्यसूत्रेणैव निर्वाहे सुध्युपास्य इत्यादौ 'स्थानेऽन्तरतम'इत्यस्य प्रवृत्तिर्व्यर्थेति चेन्न, व्यक्तिपक्षे इक्पदेन षट्षष्टेर्ग्रहणाद्यण्देन च चतुर्णां ग्रहणाद्यथासङ्ख्याऽसम्भवात् । न चाऽणुदित्सूत्रस्य 'त्वादिभ्यश्चे'त्यादिनिर्देशेनाऽविधीमानाण्बोधकं पदं स्वबोध्याण्सवर्णान्गृह्णातीति लाक्षणिकेऽर्थे सति षट्षष्टिग्रहणमिव यण्पदेनापि सवर्णग्रहणं भवत्विति वाच्यम् । भाव्यमानेन सवर्णानामग्रहणात् ।

जातिपक्षे तु यथासङ्ख्येनाप्यन्वयः सिध्यतीति भाष्ये स्पष्टम् ।

ननु सुद्ध्युपास्य इत्यत्रानचिचेति धस्य सकृद्द्वित्वे कृतेऽपि पुनः प्रवृत्त्या पुनर्द्वित्वेन भाव्यमिति चेन्न, लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति पुनर्द्वित्वप्रवृत्तेरसंभवात् । समः सुटीति सूत्रारम्भाच्चेयं परिभाषा ज्ञाप्यते । नच दकारे कृते द्वित्वं स्यादितिवाच्यं, विकारकृतलक्ष्यभेदस्याऽनाश्रयणात् ।

## 'सुद्ध्युपास्य' इत्यत्र यणस्स्थानिवत्त्वादनचीतिद्वित्वनिषेधः कस्मान्न ? ।

न च स्थानिवदादेश इति विधिवाक्येन इकारवृत्त्यच्त्वं यकारे आरोप्य अनचीति द्वित्वनिषेधेन भाव्यमिति वाच्यम् । अनल्विधाविति स्थानिवत्त्वनिषेधात् । न च अलो विधिरिति षष्ठीसमासे षष्ठ्याश्च 'स्ववृत्तिधर्मावच्छिन्नोद्देश्यताकत्व'सम्बन्धार्थकतया 'अल्वृत्तिधर्मावच्छिन्नाद्देश्यताके विधौ आदेशो न स्थानिव'दित्यर्थे सति सुध्युपास्य इत्यत्राऽदोषेऽपि रामायेत्यत्राल् यकारस्तद्वृत्तिर्धर्मो यन्त्वं, तदवच्छिन्नोद्देश्यताके सुपि चेति दीर्घविधौ स्थानिवत्त्वनिषेधाद्दीर्घो न स्यादिति वाच्यम् , अनल्विधावित्यस्य पूर्वसूत्रादार्थक्रमस्य बलवत्तया स्थानिपदसम्बन्धे षष्ठ्या विपरिणामे स्थानिघटकाल्वृत्तीत्यादिरूपेणार्थे स्वीकृते रामायेत्यत्र यन्त्वस्यादेशवृत्तिधर्मत्वान्निषेधाऽप्राप्तेः । न च स्थानी ङेः, तद्घटको योऽल् एकारः, तद्वृत्तिर्धर्मः सुप्त्वं, तदवच्छिन्नोद्देश्यताके दीर्घविधौ पुनरपि निषेधः स्यादिति वाच्यं, कष्टायेत्यादिनिर्देशादल्त्वव्याप्येत्यस्यापि निवेशेन सुप्त्वस्याल्त्वव्याप्यत्वाऽभावेनाऽदोषात् । न चैवमपि प्रदीव्य प्रपठ्येत्यादौ क्त्वावृत्ति वलादित्वमादाय इट्प्रसक्तौ निषेधाऽनापत्ताविडापत्तिरिति वाच्यं, विधिग्रहणसामर्थ्यादेव सामान्यधर्मग्रहणेन स्थानिघटकाऽल्वृत्त्यल्त्वव्याप्यधर्मघटितधर्मावच्छिन्नोद्देश्यताके विधा-

वादेशो न स्थानिवदित्यर्थेन स्थानिघटकवल्त्वृत्तिवलादित्वस्य वल्त्वघटितत्वान्निषेधेन दोषाऽभावादित्यन्यत्र विस्तरः।

## पुत्रहती।

पुत्रो हतो यया सा,-इत्यत्र अनचिचेति द्वित्वस्य 'वा हतजग्धयो'रिति वार्तिकेन विकल्पेन निषेधे पुत्रहती–पुत्रहतीति रूपद्वयम्भवति।

न चात्र विकल्पेन द्वित्वे एव रूपद्वयलाभादिदं वार्तिकं व्यर्थमिति चेन्न। अनुत्तरस्य पुत्रशब्दावयवस्य यरो वा द्वित्वं चेत्तर्हि हतजग्धयोरेवेति, आक्रोशे एव चेति नियमार्थं तत्सत्त्वात्। अतएव पुत्रच्छिन्नीत्यादौ द्वित्वाऽभावः। श्रुतानुमितयोः श्रुतसम्बन्धो वलीयानिति परिभाषया च विपरीतनियमाऽभाव इत्यन्यत्र विस्तरः।

## हर्य्यनुभवः।

हर्य्यनुभवे हि अचो रहाभ्यामिति वा द्वित्वे द्वियम्। न चात्र हलो यमां यमि लोपेन एकयं रूपं, द्वित्वाऽभावपक्षेऽप्येकयं रूपं, तर्हि हलोयमामिति लोपशास्त्रं विफलमेवेति वाच्यम्, 'आदित्यो देवता अस्येत्यादित्यं हवि'रित्यत्र ण्यप्रत्यये यस्येति चेत्यलोपे हलो यमामिति यलोपे च एकयकाररूपश्रवणार्थं लोपसाफल्यात्।

## हरये।

हरे ए इत्यत्रैचोऽयवायाव इति अयादेशे हरये इति भवति।

न च प्रकृतसूत्रे अय् अव् इत्यत्र हलन्त्यमिति यवयोरित्त्वे तस्यलोप इति लोपेनभाव्यमिति चेन्न, उच्चारणस्य वैयर्थ्यात्। एवञ्चेत्संज्ञाऽपि न, फलाऽभावात्। न चैवमुच्चारणसामर्थ्याद्यवयोर्नेत्त्वमित्येव ब्रूयादिति वाच्यम्, 'यं विधिं प्रति यस्योपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ विधिर्बाध्यते' इति भाष्येण इत्वं प्रत्युच्चारणस्य कारणत्वात्तथावक्तुमशक्यत्वादिति संक्षेपः।

## गव्यम्।

न च गोर्विकारो गव्यमित्यत्राऽन्तर्वर्तिविभक्तेराश्रयणेन वस्य पदान्तत्वे लोपः शाकल्यस्येति वलोपेन भाव्यमिति वाच्यम्। यचि भमिति भत्वेन पदत्वस्य वाधात्। एवं गामिच्छति गव्यति नावमिच्छति नाव्यतीत्यत्राप्यन्तर्वर्तिविभक्त्या आश्रयणे वलोपः कस्मान्न भवतीति न वाच्यम्। नः क्य इति नियमेन नान्तस्यैव पदत्वात्।

## गव्यूतिः।

नन्वेवं तर्हि गव्यूतिरित्यत्र भत्वाभावाद्वलोपो दुर्वार इति चेन्न, वान्त इत्यत्र

वकाराद्वोर्यूताविल्यत्र छकारात्पूर्वभागे लोपो व्योरिति लोपेन वकारप्रश्लेषेण श्रूयमाण-वान्तादेशस्यैव विधानात्।

## धातोस्तन्निमित्तस्यैवेत्यस्य कोऽर्थः ?।

ननु धातोस्तन्निमित्तस्येति सूत्रे यिप्रत्यय इत्यनुवृत्त्या अव्यवहितपूर्वत्वसम्बन्धेन-यादिप्रत्ययस्य धातावन्वये सति—'यादिप्रत्ययपरकधातुघटकस्यैचो वान्तादेशश्चेत्तर्हि यादिप्रत्ययनिमित्तस्यैवे'त्यर्थे योध्यम् बोध्यमित्यत्रातिव्याप्तिः, अव्यवहितपूर्वत्वसम्बन्धेन एचि अन्वये सति 'यादिप्रत्ययपरकस्य धात्ववयवस्यैचो वान्तादेश' इत्याद्यर्थे गव्यती-त्यादावव्याप्तिः, एचो यादिप्रत्ययनिमित्तकत्वाऽभावादिति चेत्। अव्याप्त्यतिव्याप्ति-दोषनिवारणाय एच इत्यस्यानुवृत्तिः स्वीकर्तव्या। एवं च तस्य धातुविशेषणतया तदन्त-विधिना 'एजन्तस्य धातोरवयवीभूतस्य यादिप्रत्ययपरकस्यैचो वान्तादेशश्चेत्तर्हि यादि-प्रत्ययनिमित्तस्यैवे'ति परिष्कृतोऽर्थः, तेन योध्यमित्यादावेजन्तत्वाभावादप्रवृत्तिः, एवं गव्यतीत्यादावपि यकारान्तस्य धातुत्वेन धातोरेजन्तत्वाऽभाव एवेति तत्त्वम्।

## कानि सन्ति कौ स्त इति फक्किका व्याख्येया।

कानि सन्ति, कौ स्तः। अयं भावः-पूर्वं तावदत्र पदसंस्कारपक्षे दोष एव नास्ति, वाक्यसंस्कारपक्षेतु श्रुतवोधक्रमेणान्तरङ्गत्वात्पूर्वं कानि इत्यस्य ततः सन्ति इत्यस्य सिद्धौ सत्यामचः परस्मिन्नित्यस्य प्रवृत्त्या यद्यपि स्थानिवत्त्वेन यणावादेशौ प्राप्नुतस्तथापि न पदान्तेत्यनेन पदान्तविधौ स्थानिवत्त्वनिषेधात्तदभाव इति।

## इयं वृद्धिरेङि पररूपमित्यस्यैव बाधिकेत्यादिः।

ननु उपैति-उपैधते इत्यादौ एङि पररूपमित्यस्य शिवेहि—अवेहीत्यादौ ओमाङो-श्चेत्यस्य च प्राप्त्या एत्येधत्यूठ्सु इत्यस्य निरवकाशत्वेन बाध्यसामान्यचिन्तापक्ष-मवलम्ब्य द्वयोरपि वृद्ध्योरस्यापवादत्वमिति, चेन्न, 'पुरस्तादपवादा अनन्तरान्विधीन्बाधते-नोत्तरा'निति न्यायेन एङि पररूपमित्यस्यैव बाधकत्वात्। बाध्यशास्त्राणां व्यापकत्वे एव [अचि र ऋत इत्यादौ हि गुणदीर्घोत्वानामपवादत्वे] बाध्यसामान्यचिन्तापक्षस्याश्रयणात्। अतश्चाऽवेहीत्यादौ पररूपमेव न तु वृद्धिरिति संक्षेपः।

## प्रौढवान्।

ननु प्रौढ इतिवत् प्र-ऊढवान्नित्यत्रापि प्रादूहोढोढ्येषैष्येष्विति वार्तिकेन वृद्धिर्भवतु इति चेन्न, अर्थवद्ग्रहणे इति परिभाषया 'यत्रानुपूर्व्यवच्छिन्नविषयताप्रयोजकं पदं तत्रार्थवत्पदमुपतिष्ठते' इत्यर्थिकया क्तान्तस्यैवार्थवत ऊढशब्दस्य ग्रहणात्; 'समुदायो हि अर्थवान् तस्यैकदेशोऽनर्थक' इत्येकदेशस्य निरर्थकत्वेनोढवानित्येतद्घटकस्यौढशब्दस्या-

नर्थकत्वात्। न चाऽस्यां परिभाषायां बीजाऽभाव इति शङ्क्यम्। व्रश्चेति सूत्रे राजेः पृथग् भ्राजिग्रहणस्यैव प्रमाणत्वात्। न च फणादिकार्यार्थं तदितिवाच्यम्, एतत्तदोः सुलोप इत्यत्र तद्ग्रहणस्यैव लिङ्गत्वादित्यलम्।

## प्राच्र्छति।

ननु प्राच्र्छतीत्यत्रान्तादिवच्चेति रेफस्य पदान्तत्वे सति खरवसानयोरिति विसर्गेण भाव्यमिति चेन्न, 'उभयथर्क्षु—कर्तरि चर्षी'त्यादिनिर्देशेन पूर्वान्तवद्भावेन पदान्त-रेफस्य विसर्गोऽभाव इति ज्ञापनेनाऽदोषात्।

## उपसर्गादृतीत्येव सूत्रमस्तु।

ननु 'उपसर्गादृती'त्यत्र वर्णग्रहणे सर्वत्र तदन्तविधिरिति नियमेन शब्दस्वरूप-माक्षिप्य प्राप्तस्य तदन्तविधेरपवादभूतया यस्मिन्विधिस्तदादाविति परिभाषया तदादिविधिं कृत्वा ऋकारादौ शब्दस्वरूपे वृद्धिरित्यर्थे स्वीकृते प्रकृते दोषाऽभावाद्धातुग्रहणं व्यर्थमिति चेन्न, प्रर्षभ इत्यत्रापि वृद्धिप्रसक्तेः। न चात्र क्रियायोगाऽभावेनोपसर्गत्वाभावाद्वृद्धेः प्राप्ति-रेव नास्तीति वाच्यम्। ऋषभं प्रगत इति विग्रहे गतशब्दोपस्थितगमनक्रियानिरूपितोप-सर्गत्वस्य तत्र सुलभत्वात्। न चैवमपि—ऋकारादिशब्दोपस्थितक्रियानिरूपितमुपसर्गत्वम्, तथा ऋकारादिशब्दातिरिक्तगतादिशब्दोपस्थापितक्रियानिरूपितमुपसर्गत्वमिति द्विविधो-पसर्गत्वमध्ये एतत्सूत्रविषये प्रत्यासत्त्या प्रथमस्यैव ग्रहणेन तस्य च धातुवाच्यक्रिया-निरूपितस्यैव सम्भवेन, तेनैव धातोराक्षेपे सिद्धे धातोरिति निरर्थकमितिवाच्यम्। योग-विभागार्थतया तस्य साफल्यात्। प्रथमयोगस्योपसर्गादृतीत्यस्य बाधकं यदृत्यक इति सूत्रं, तद्बाधनाय च धाताविति द्वितीयोऽयं योगः। अतः पाक्षिकोऽपि ऋत्यक इति प्रकृति-भावोऽत्र नेति बोध्यम्।

## अचि किं कुमारी शेते इति फक्किका व्याख्येया।

ननु—अकः सवर्णे इत्यत्रेको यणचीत्यतोऽच्पदसम्बन्धाभावेऽकःसवर्णे परे दीर्घ इत्यर्थे सिद्धे अकः सवर्णा अक एव, ते च अच्स्वरूपा एव। अतः फलत एवाऽज्लाभेऽच्पदं नानुवर्तनीयमिति चेन्न, स्थानप्रयत्नसाम्यादिकारशकारयोः सावर्ण्येन 'कुमारी शेते' इत्यत्र दीर्घापत्तेः। न च नाज्झलाविति सावर्ण्यनिषेधः। तत्र अच्ग्रहणेन ह्रस्वस्यैव ग्रहणा-द्दीर्घेऽप्रवृत्तेः। न चाणुदिदित्यनेन दीर्घादीनामपि तत्र ग्रहणम्, वाक्यापरिसमाप्तिन्यायेना-णुदित्सूत्रस्य सवर्णसंज्ञादिधायकनिषेधकशास्त्राभ्यां प्राक्कार्यकरणायाऽप्रवृत्तेरित्यलम्।

### अकः किं ? हरये ।

नन्वकः सवर्णइत्यत्राक इत्यस्याऽभावे सवर्णो दीर्घ इत्येव सूत्रिते सति 'अचश्चे'त्युपस्थितया 'अचः सवर्णेऽचि दीर्घः' इत्यर्थे सति प्रकृते दैत्यारिरित्यादौ दोषाऽभावादको ग्रहणं व्यर्थमिति चेन्न । हरे ए इत्यत्राऽपि दीर्घापत्तेः । न चास्मिन्प्रकरणे सर्वत्राद्गुण इत्यत आदित्यस्य सम्बन्धः । एवञ्चात्राऽपि तत्सम्बन्धेऽवर्णात्सवर्णेऽचि दीर्घ इत्यर्थे हरये इत्यत्र न दोष इति वाच्यम्, एवं तर्हि 'ए दीर्घ' इत्येव सिद्धे 'सवर्ण'ग्रहणस्यैव व्यर्थत्वेन आदित्यस्याऽत्राऽसम्बन्धात् ।

### ऋति ऋवा लृति लृ वेति वक्तव्यमिति वार्तिके मूलकृदुक्तं, युक्तमयुक्तंवेति व्याख्यायताम् ।

ऋति ऋवा लृति लृ वेति वार्तिके योगं विभज्य 'ऋति सवर्णे ऋवा' 'लृति लृ सवर्णे लृ वे'ति वार्तिकद्वयं स्वीकृतं भाष्यकृता । तत्र वार्तिकद्वयेन विधीयमानौ ऋलृवर्णौ दीर्घौ चेत्तर्हि अकः सवर्णे इत्येव सिद्धेऽत्र विधानं व्यर्थमेवं च ह्रस्वौ तौ वर्णाविति प्राञ्चः । 'आद्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा । अभितोऽज्भक्तेरपरा । द्वितीयस्य मध्ये द्वौ लकारौ शेषं प्राग्व'दिति वदता मूलकृता त्वनयोर्दीर्घत्वं स्वीकृतम् । तदेव च युक्तम् । एतद्वार्तिकप्रत्याख्यानपरभाष्यप्रामाण्यात् । भाष्यकृता हि ईषत्स्पृष्टप्रयत्नकमृलृवर्णं स्वीकृत्येदं द्वयं प्रत्याख्यातम् । होतृ–ऋकार इत्यत्र ऋकारद्वये द्वौ रेफौ तयोरीषत्स्पृष्टः प्रयत्नः । अज्भागस्य विवृतः प्रयत्नः । ईषत्स्पृष्टप्रयत्नसाम्येनेषत्स्पृष्टप्रयत्न ऋकारः । अत्रेत्थं विचार्यते,-आद्यस्य मध्ये द्वौ रेफावित्यत्र किं प्रमाणम् ? । शृणु । ऋवर्णान्नस्य णत्वं वाच्यमित्यस्य खण्डनावसरे 'वर्णैकादेशा वर्णग्रहणेन गृह्यन्ते, योऽसौ ऋकाराश्रितो-रेफस्तदाश्रितं णत्वं भविष्यती'ति भाष्यमेवात्र मानमृकारे रेफ इति । प्रातर्कृतमित्यादौ आच्छादयति, चेच्छिद्यत इत्यादौ छेचेत्येवसिद्धे दीर्घादित्यादीनां वैयर्थ्यमित्यादिशङ्कासमाधानवद्रोरीत्यस्य लोपस्य शङ्का नैवोद्घाटिता भाष्यकृता, अतः पूर्वत्र अज्भागः पादमात्रः सिद्धः । 'रेफात्परा याऽज्भक्तिस्तया व्यवधानाण्णत्वं न प्राप्नोति, एवं तर्हि अट्कुप्वाङ्नुमिति सूत्रेणैव णत्वं भविष्यती'ति ऋवर्णान्नस्येतिवार्तिकप्रत्याख्यानावसरेभाष्यकृतोक्तत्वादुत्तरत्राऽप्यज्भागः सिद्धः । एवमेव होतॢकार इत्यत्र तोर्लीति लत्वं न शङ्कितमतस्तत्पूर्वत्राऽप्यज्भाग इति तत्त्वम् ।

### एङन्तस्य किं चित्रग्वग्रमिति पङ्क्तिर्व्याख्यायताम् ।

ननु सर्वत्रविभाषेतिसूत्रे एङः पदान्तादित्यत एङ्सम्बन्धाऽभावेऽपि गोशब्दस्य सर्वथा

एङन्तत्वात् प्रकृतेऽदोषादेङ्सम्बन्धो व्यर्थ इति वाच्यम्। चित्रगु अग्रमित्यत्र-प्रकृतिभावापत्तेः। न चाऽत्र गोशब्द एव नास्तीति वाच्यम्। चित्रा गावोऽस्येति विग्रहे बहुव्रीहौ गोस्त्रियोरिति ह्रस्वे एकदेशविकृतन्यायेन गोशब्दत्वलाभात्। न च तेनैव न्यायेनैङन्तत्वेऽपि सिद्धेऽत्रैतद्व्यावृत्त्यर्थं कृतेऽप्येङ्सम्बन्धे दोषस्तदवस्थ एवेति वाच्यम्। एतादृशधर्मस्यैकदेशविकृतन्यायेनानयनाऽसम्भवात्। छिन्नपुच्छे शुनि श्वत्वव्यवहारेऽपि पुच्छवानयं श्वेति व्यवहाराऽभावादिति सङ्क्षेपः।

## अतीति निवृत्तमिति।

नन्ववङ्स्फोटायनस्येत्यत्रैङः पदान्तादिति सूत्रादनुवर्तमानमतीतिपदं निवृत्तं, मण्डूकप्लुत्या च अचीति सम्बध्यते इत्यत्र किं बीजमिति चेदुच्यते, गवोद्ध इति भाष्यप्रयोगस्य, इन्द्रे चेत्यस्यारम्भसामर्थ्यान्नित्यत्वमिति भाष्यस्य च प्रमाणत्वात्। तस्य भाष्यस्यायमाशयः-इन्द्रे चेत्यत्र विभाषापदमनुवर्तते चेत्तर्हि गवेन्द्र इत्यत्रावङ् स्फोटायनस्येत्येव सिद्धमत आरम्भसामर्थ्यान्नित्यत्वमिति। एवञ्च 'इन्द्रे च नित्य'मिति च प्राचोक्तं व्यर्थत्वान्नादर्तव्यम्।

## अथ प्रकृतिभाव इति लेखस्य को ऽभिप्रायः ?।

ननु पूर्वं तावन्मूलकर्तुरेवं शैल्येव नास्ति, लिखितेऽपि च अथेत्यस्मिन् 'सर्वत्र विभाषे'त्यस्मादेव पूर्वं तल्लेखनीयमिति चेन्न। 'प्रकृत्यान्तः पादमव्यपरे' इत्यस्मात्प्रकृत्येत्यनुवर्तते, तत्र च नान्तः पादमित्यपि क्वाचित्कः पाठो भाष्ये दृश्यते। एवञ्च नान्त इति पाठेऽपि सर्वत्र विभाषेत्यत्र निषेधार्थकत्वेन निर्वाहे सिद्धेऽपि प्लुतप्रगृह्या इत्यत्र प्लुताः प्रगृह्याश्च नेत्यर्थे जाते महदनिष्टमितिसूचनाय प्लुतप्रगृह्या इत्यत एव प्रकृतिभावारम्भात्। नं च नान्तपाठोऽपि भाष्यसम्मत इति वाच्यम्। 'इकोऽसवर्णे इत्यत्र 'चेन प्रकृत्येत्यनुकृष्यते' इति भाष्यविरोधादिति मूलकारः। श्रीनागेशभट्टानां मते तु नान्तपाठोऽपि भाष्यसम्मत एव। तथाहि प्लुतप्रगृह्या इत्यत्र षष्ठ्यर्थे प्रथमा, प्लुतानां प्रगृह्याणाञ्च यद्यत्प्राप्तं तत्तन्नेत्यर्थेनाऽदोषः। 'चेन प्रकृत्ये'ति भाष्यमपि नकारार्थः प्रकृत्येतिरीत्यासंगतमेवेत्यलम्।

## प्लुतप्रगृह्या इत्यत्र नित्यंग्रहणस्य साफल्यं प्रदर्श्यताम्।

ननु 'प्लुतप्रगृह्या' इत्यत्र 'इन्द्रे चे'ति सूत्रस्यारम्भसामर्थ्यान्नित्यत्वमिति भाष्येण विभाषापदाऽनुवृत्त्यभावे स्वीकृते नित्यत्वलाभः सुतरामेवेति नित्यमित्यस्य नैष्फल्यमिति चेन्न। योगविभागार्थं तस्य सार्थक्यात्। नच कृतेऽपि योगविभागे योगद्वयस्य समानार्थकत्वेन विशेषविधानाऽभावेन 'नित्य'मिति योगस्य वैफल्यमेवेति वाच्यम्। 'प्लुतप्रगृह्या अची'ति

पूर्वयोगस्य परत्वेन बाधको य 'इकोऽसवर्णे' इति योगस्तस्यारम्भसामर्थ्यान्नित्यमिति-योगस्य बाधनार्थत्वेन साफल्यात्। नच परस्परलब्धावकाशस्य परत्वाद्बाध्यबाधकभावो दृश्यते, अत्र तु 'चक्रि-अत्रे'त्यत्र चरितार्थेनेकोऽसवर्ण इत्यनेन यत्र कुत्राप्यचरितार्थस्य 'प्लुतप्रगृह्या' इत्यस्य विरोधे सति परत्वाद्बाधो न युक्त इति वाच्यम्। हरी इमावित्यत्र तच्चारिताર्थ्यात्। एवञ्च हरी एतावित्यत्र अनेनैव प्रकृतिभावो नतु इकोऽसवर्णे इति ह्रस्वसमुच्चित इति तत्त्वम्।

## चक्रि-अत्र। चक्र्यत्र।

चक्री-अत्रेत्यत्र प्राप्तं यणं बाधित्वेकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेति प्रकृतिभावे कृते-चक्रि अत्रेति, तदभावे यणि सति चक्र्यत्रेति रूपद्वयं सिद्धम्। अत्र काशिकाकारादिभिः रूपत्रयं साध्यते। तथाहि इकोऽसवर्णे इत्यत्र 'चे'ति योगं विभज्य 'चेन प्रकृत्या इत्यनुकृष्यते' इति भाष्यबलात्स्वतन्त्रः प्रकृतिभावोऽनेन विधीयते। तेन चक्री-अत्रेति। तदभावे पूर्व-योगेन ह्रस्वस्तत्र च तद्विधानसामर्थ्यादेव यणभावः, अतश्चक्रि-अत्रेति रूपं। पक्षे यणि सति च चक्र्यत्रेति च। यदि हि ह्रस्वसमुच्चितः प्रकृतिभावस्तर्हि तु चकारो व्यर्थ एवेति तद्भावः। तन्न। 'ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य' इत्येवं भाष्येण चकारस्य प्रत्याख्यातत्वात्। अतो रूपद्वयमेव भाष्यसम्मतमिति सङ्क्षेपः।

## पदान्ता इत्येव-आर्च्छत्।

ननु 'ऋत्यक' इति सूत्रे 'एङः पदान्ता'दित्यतः पदान्ता इत्यस्याऽसम्बन्धे ऋति परेऽकः प्रकृतिभाव इत्यर्थे ब्रह्मर्षिरित्यत्र दोषाऽभावात्पदान्ता इत्यस्य सम्बन्धो निष्फल इति चेन्न, 'आर्च्छ'दित्यत्राऽपदान्तस्य 'आ' इत्यस्य प्रकृतिभावापत्तेः। न च आटश्चेत्यत्र 'आट' इत्येको योगः, 'च'इति द्वितीयो योगः। द्वयोः समानार्थकत्वाच्चेति योगो बाधकबाधनार्थ-स्तेन 'आट' इत्यस्य परत्वाद्बाधकमृत्यक इति सूत्रं प्रबाध्य चकारेण वृद्धिर्विधीयते, एवञ्च तत्राऽदोषान्निष्फलमेव तदिति वाच्यम्। ईषदून ऋच्छको बहृच्छक इत्यत्र प्रकृतिभावापत्तेः। अत्र हि विभाषा सुपो बहुजिति सूत्रेण बहुच्प्रत्ययस्य पूर्वभावित्वादपदान्तत्वमिति दिक्।

## सप्तर्षीणाम्।

ननु सप्तानाञ्च तेषामृषीणाञ्चेति विग्रहे द्विगुसमासे सुब्लुकि सप्त ऋषि आमित्यत्र ऋत्यक इति प्राप्तस्य प्रकृतिभावस्य 'न समासे' इति निषेधेन,-भाव्यमिति चेन्न, सिति-चेत्यस्य साहचर्येणास्याऽप्रवृत्तेः। न च साहचर्यं कुत्रापि न दृष्टमिति वाच्यम्, 'सिन्नित्यसमासयोः शाकलप्रतिषेधो वाच्यः' इति वार्तिके सहपठितत्वात्साहचर्यदर्शनात्।

## प्रत्यभिवादेऽशूद्रे इत्यस्यार्थ उपवर्ण्यताम्।

अभिवादस्यान्ते यत्किञ्चिदुच्यते तत्प्रत्यभिवादशब्देन गृह्यते, न त्वाशीर्वादमात्रमेव, अशूद्रे इति पर्युदासात्। शूद्रेभ्य आशीर्वचनस्य मनुना निषेधात्। अतः कुशलप्रश्नादि यत्किञ्चिदुच्यते तत्सर्वं तेन गृह्यते। 'वाक्यस्य टेः प्लुत उदात्त' इत्यस्याधिकारोप्यत्र। एवञ्च 'अशूद्रविषयको यः प्रत्यभिवादः तदर्थे वर्तमानं यद्वाक्यं तद्वाक्यघटकीभूतस्य टेः सतः प्रत्यभ्युद्यमानार्थबोधकपदघटकस्य टेरुदात्तत्वविशिष्टः प्लुतो भवती'ति सूत्रार्थः। एवमेव 'दूराद्धूते चे'त्यस्यापि 'दूरात्सम्बोधनेऽर्थे यद्वाक्यं तद्घटकीभूतस्य टेः सतः सम्बोध्यमानार्थबोधकपदघटकस्य टेः प्लुतः, स चोदात्तत्वविशिष्ट इत्यर्थः।

## हैहेप्रयोगे हैहयोः।

है हे इत्यनयोरुत्तरप्रयोगः पूर्वप्रयोग एव वा नेष्टः, किन्तु प्रयोगद्वयमपीष्टम्। अन्यथा 'हैहेऽन्ते' इत्येव ब्रूयात्। अथ हे रामेत्यादौ रामेत्यस्य तत्तत्सूत्रेण सिद्धेः, हैहयोरेव अनेन स्यादिति हैहेग्रहणं व्यर्थमिति चेत्तर्हि तद्ग्रहणं नियमार्थं–'हैहयोरेव प्लुत' इति।

## वत्किम्–अग्नी३इति।

नन्वप्लुतवदुपस्थित इत्यत्र 'अप्लुत उपस्थिते' इत्येव सूत्रमस्तु 'अवैदिके इतिशब्दे परे प्लुतोऽप्लुतो भवती'त्यर्थोऽस्तु। न च प्लुतभिन्नो ह्रस्वो दीर्घश्चेति द्वयोर्मध्ये सादृश्याद्दीर्घ एव भवत्विति वाच्यं। तथा सति 'दीर्घ उपस्थित'इत्येव ब्रूयात्, एवञ्च प्रकृते दोषाभावाद्वद्ग्रहणं व्यर्थमेवेतिचेन्न, 'अग्नी३इति' इत्यत्राऽप्लुते दीर्घापत्तेः। न च प्लुताश्रये प्रकृतिभावेऽसत्यपि ईदूदेदिति प्रगृह्याश्रये प्रकृतिभावे कृते न कश्चिद्दोष इति वाच्यम्, 'अग्नी३इति' इत्यत्र प्लुतस्य श्रुतिर्न स्यादप्लुतस्य विधीयमानत्वादिति सङ्क्षेपः।

## किम्वुक्तम्।

ननु 'किमु उक्त'मित्यत्र 'मयउञोवो वे'त्यनेन उकारस्य वत्वे कृते हल्परत्वान्मोऽनुस्वार इत्यनुस्वारेण भाव्यमिति चेन्न, पूर्वत्रासिद्धमिति अनुस्वारदृष्ट्या वत्वस्याऽसिद्धत्वात्। न चेको यणचीत्यनन्तरमेवास्यसूत्रस्य पाठकरणेन तत्र यणनुवृत्त्या उकारस्य यणि कृते सकलेष्टसिद्धौ त्रिपाद्यामस्य पाठो वकारग्रहणञ्च निष्फलमिति वाच्यम्। अनुस्वारं प्रति वकारस्य सिद्धत्वेनाऽनुस्वारापत्तेः। न च सन्निपातपरिभाषया मकारं निमित्तीकृत्य जातो वकारोऽनुस्वारद्वारा सम्बन्धं विहन्तुमनर्ह इति वाच्यम्। 'श्रुवः पञ्चाना'मित्यत्र 'पञ्चाना'मिति निर्देशेन त्रिपाद्यां सन्निपातपरिभाषाया अप्रवृत्तेः। अन्यथा–'पञ्चन् आ'मित्यत्र नान्तत्वमभिलक्ष्य जाता षट्संज्ञा नुड्निमित्तं। सोऽयं नुट् पदत्वद्वारा नलोपविधौ कथं

निमित्तं स्यात्, सन्निपातविरोधात्। न चैवं प्रवृत्त्यभावे ज्ञातेऽपि अन्तरङ्गपरिभाषया हल्मात्रनिमित्तकत्वेन मोऽनुस्वार इत्यस्याऽन्तरङ्गत्वान्मकारोकारेतिवर्णद्वयापेक्षत्वेन वत्वस्य बहिरङ्गत्वादसिद्धत्वेनाऽनुस्वाराऽभावइति वाच्यम्। वाह ऊडिति सूत्रस्थोठ्ग्रहणेन ज्ञापितायाः षाष्ठ्या अन्तरङ्गपरिभाषायास्त्रैपादिके विषयेऽप्रवर्तनात्। न च भाष्यसम्मतयथोद्देशकार्यकालाख्यपक्षद्वयमध्ये कार्येण काल्यते स्वसन्निधिं प्राप्यते इति कार्यकाल इति विग्रहेणाऽस्मिन्पक्षेऽदृष्टपिशाचाकर्षणन्यायेन परिभाषायास्त्रिपाद्यां प्रवृत्त्या दोषाऽभाव इतिवाच्यं, यथोद्देशपक्षे दोषस्य तादवस्थ्यात्। न चैकतरेणपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानमनुचितमिति कार्यकालस्यैवाश्रयणेनाऽदोषान्मय उञ इत्यस्य त्रिपाद्यां पाठो 'व'ग्रहणञ्च व्यर्थमिति वाच्यम्। अन्तरङ्गपरिभाषाया अनित्यत्वस्य ज्ञापनाय तत्र पाठस्य वग्रहणस्य च साफल्यात्। तत्फलञ्च 'अक्षैर्दीव्यतीत्यक्षद्यू'रित्यत्र बहिरङ्गे ऊठ्यसिद्धेऽपि अन्तरङ्गो यण्भवतीति सङ्क्षेपः।

## अर्थग्रहणं किमिति फक्किका व्याख्येया।

ननु—'ईदूतौ च सप्तम्यर्थे' इत्यत्रार्थग्रहणाऽभावे 'ईदूतौ च सप्तमी'ति सूत्रिते प्रत्ययग्रहणपरिभाषया तदाद्युपस्थित्या तदन्तविधौ सति सप्तम्यन्ततदादिं विशेष्यीकृत्य ईदूतोर्विशेषणत्वेन पुनस्तदन्तविधौ 'ईदून्तमूदन्तं च यत्सप्तम्यन्तं तदादि, तत्प्रगृह्य'मित्यर्थे जाते 'सोमो गौरी'त्यादौ प्रत्ययलक्षणेन सप्तम्यन्तत्वे दोषाऽभावादर्थग्रहणं व्यर्थमिति चेन्न, संज्ञाविधाविति परिभाषया तदन्तग्रहणाऽभावे 'ईदन्ता ऊदन्ता च या सप्तमी सा प्रगृह्यसंज्ञिके'त्यर्थे जाते गौरी अधिश्रित इत्यत्र गौरीत्यस्येदन्तत्वेऽपि सप्तमीत्वाऽभावात्प्रकृते दोषापत्तेः। न चैवं सूत्रमेव व्यर्थं सत्सञ्ज्ञाविधाविति परिभाषाया अप्रवृत्तिमत्र ज्ञापयतीतिवाच्यं। ङ्यन्तययीशब्दात्परमत्रेत्यस्य योगे 'ययी अत्रे'त्यादौ व्यपदेशिवद्भावेनेदन्तत्वे, परादिवद्भावेन सप्तमीत्वे सति, तथा ऊकारांशे 'हरिषु—उ 'अत्रे'ति 'हरिषू अत्रे'त्यादौ पूर्वान्तवद्भावेन सप्तमीत्वे सिद्धे शास्त्रस्य साफल्यात्। नन्वेवमीदूतौ च सप्तमी प्रगृह्यम्, अदसः, एच्च द्विवचनमिति लघुभूतन्यासेनैव सकलेष्टसिद्धौ गुरुभूतन्यासस्य वैयर्थ्येन तत्प्रामाण्यात्संज्ञाविधाविति निषेधाप्रवृत्त्याऽर्थग्रहणं निरर्थकमिति चेन्न, वाप्यामश्वो वाप्यश्व इत्यत्र प्रगृह्यत्वं माभूदित्यर्थं तत्साफल्यात्। नच कृतेऽप्यर्थग्रहणे सप्तम्यर्थे वर्तमानमित्येव सूत्रार्थे स्वीकृतेऽजहत्स्वार्थावृत्तिपक्षे वापीत्यस्यापि तत्र वर्तमानत्वाद्दोषस्तदवस्थ एवेति वाच्यम्। मण्डप इत्यादिवजहत्स्वार्थवृत्तिपक्षस्वीकारेणादोषात्। न च 'जहत्स्वार्था तु तत्रैव रूढिर्यत्रविरोधिनी'ति नियमेनात्र विरोधाऽ-

भावात्तदस्वीकारे प्रगृह्यत्वं दुर्वारमिति वाच्यम्। अर्थग्रहणसामर्थ्यात् पर्यवसन्नक्रिया-बोधकपदाध्याहारेण सप्तम्यर्थे पर्यवसन्नमीदन्तमूदन्तं प्रगृह्यमित्यर्थे कृते, मात्रपदसन्निवेशेन 'सप्तम्यर्थमात्रे वर्तमान'मित्याद्यर्थे वा 'वाप्यश्व' इत्यत्र वाप्यधिकरणकाश्वइत्यर्थेन तदर्थे पर्य-वसन्नत्वाऽभावेनाऽदोषात्। न च सोमो गौरीत्यत्रापि 'गौरी'त्यस्यैकत्वस्त्रीत्वाद्यर्थस्य जाग-रूकत्वात्तदर्थे पर्यवसन्नत्वाऽभावेन दोष इति वाच्यम्, अर्थग्रहणसामर्थ्यादेव 'सप्तम्यर्थ-निष्ठोपस्थितीयमुख्यविशेष्यताप्रयोजकं यदीदन्त' मित्याद्यर्थे गौरीत्यादौ प्राधान्यादेव सप्तम्यर्थबोधनेनाऽदोषादित्यलम्॥ ❀ इत्यच्सन्धिः ❀

## टोः किम्? सर्पिष्टमम्।

ननु न पदान्ताट्टोरिति सूत्रे टोर्ग्रहणं न कार्यम्, एवञ्च 'न पदान्तादना'मित्येव सूत्र्य-ताम्। 'पदान्तात्परस्य नामशब्दावयवभिन्नस्य तवर्गस्य सस्य च न ष्टुत्व'मित्यर्थः स्वी क्रियताम्, एवञ्च प्रकृते षट्सन्तः, षट्ते इत्यादौ दोषाऽभाव इति चेन्न, प्रपूर्वकादतधातोः क्विपि प्राततीति प्रात्, आसधातोः क्विपि प्रास्ते इति प्रास्, ततश्च टीकते ढौकते इत्या-दीनां सम्बन्धे प्राट्टीकते, प्राष्टीकते, प्राड्ढौकते, इत्यादौ अन्तादिवच्चेति पूर्वान्तवद्भावेन 'प्रा'इत्यत्र पदत्वेऽनेन ष्टुत्वनिषेधापत्तेः। न च ष्टुना ष्टुरित्यत एकदेशस्य टोरनु-वर्तनेन तस्य च पञ्चम्या विपरिणामेन पदान्ताट्टवर्गादित्यर्थे लब्धे न कश्चिद्दोष इति वाच्यं, 'सन्नियोगशिष्टानां सहैव प्रवृत्तिः सहैव निवृत्ति'रिति षकारस्याप्यनुवृत्त्यापत्तेः। न च पदान्ते षस्य जश्त्वेनाऽपहारादसम्भवादननुवृत्तिरिति वाच्यं, सर्पिष्टमम्, यजुष्टम-मित्यादौ 'ह्रस्वात्तादौ तद्धिते'इति विहितस्य षत्वस्य जश्त्वं प्रत्यसिद्धत्वाज्जश्त्वाऽसम्भवेन षकारस्याप्यनुवृत्त्या सर्पिष्टममित्यादौ ष्टुत्वाऽनापत्तेः। न चात्र षत्वस्याऽसिद्धत्वेऽपि दन्त्य-सस्यैव कुतो न जश्त्वमिति वाच्यं, सस्य रुत्वं, विसर्गः, सत्वं चेति प्रक्रियायाः सत्त्वेन सस्य जश्त्वं प्रत्यसिद्धत्वात्। नच तत्स्थानिकस्य विसर्गस्य शर्षु पाठस्य कृतत्वेन झल्त्वाज्जश्त्वेन भाव्यमिति वाच्यं, तस्याऽप्यसिद्धत्वात्। नच तर्हि मूलभूतसकारस्यैव जश्त्वेन भाव्यमिति चेन्न, जश्त्वं प्रति रुत्वस्याऽपवादत्वात्। अपवादत्वाद्ध्रस्वात्तादाविति षत्वं मूलभूतसस्यैवेति तु न शङ्क्यं, तस्य चतुष्ट्वमित्यादौ चारितार्थ्यादित्यलम्।

## चतुर्मुखः।

ननु चत्वारि मुखानि यस्येति चतुर्मुख इत्यत्र समासे सुब्लुकि, प्रत्ययलक्षणेन सुप्त्वमादाय रेफस्य पदान्तत्वेन यरोऽनुनासिकेऽनुनासिकोवेति सूत्रेण 'स्थानेऽन्तरतम' इति सहकृतेन सदृशोऽनुनासिको णकारो भवत्विति चेन्न, 'स्थानेऽन्तरतम उरण् रपर'

इति संहितापाठे 'ऽन्तरतमे' इत्यपिच्छेदे कृते 'अन्तरतमे स्थानिनि सत्यादेश' इति तस्य स्थानिव्यवच्छेदकत्वेन प्रकृते ञमङणनाः स्वस्ववर्ग्येषु चरितार्थाः, यँवँलँः यवलेषु च, स्थानप्रयत्नसाम्यात्। रेफरूपस्थानिनि तु स्थानसाम्येऽपि प्रयत्नैक्याभावादत्राप्रवृत्तेः।

न च सप्तम्यन्तपाठो भाष्याऽसम्मतः, इकोयणचीत्यत्र मात्राद्वयन्यूनकालिकत्वेन सादृश्यमादाय दध्यानयेत्यादौ साफल्येऽपि 'सुद्ध्युपास्य'इत्यत्र यणप्रवृत्त्याऽनिष्टापत्तेः। एवञ्चात्रप्रथमान्तेऽन्तरतम इति पाठे तस्य आदेशव्यवच्छेदकत्वेन चतुर्मुख इत्यत्र णकारेण भाव्यमिति वाच्यम्। 'रेफस्याऽनुनासिकपरसवर्णद्विर्वचनानां प्रतिषेधो वक्तव्य' इति वार्तिकेनानुनासिकस्य निषेधात्। न चैतद्वार्तिकं भाष्यकृता प्रत्याख्यातमिति वाच्यम्, 'अनुस्वारस्य ययी'त्यतः सवर्णपदापकर्षणेन सवर्णसंज्ञकस्यानुनासिकस्य विधानेन रेफोष्मणोर्विजातीयसवर्णाऽभावेन दोषलेशस्याऽप्यभावादिति सङ्क्षेपः।

## मदोदग्राः ककुद्मन्तः।

ननु' प्रत्यये भाषायां नित्यमिति वार्तिकेन यथा तन्मात्रमित्यादौ नित्यमनुनासिकस्तथैव 'ककुद्मन्त' इत्यत्रापि मतुपि परे नित्यमनुनासिकेन भाव्यमिति चेन्न। 'मादुपधायाश्च मतोर्वोऽयवादिभ्य'इति सूत्रादयवादिभ्यइत्यनुवर्त्तनेन 'झय' इति वत्वाऽभावे मतुपो मकारादित्वेनाऽनुनासिकप्राप्तावपि यवादिगणे दान्तपाठान्न भवतीत्याशयात्।

## समासग्रहणं नियमार्थम्।

राजपुरुष इत्यत्र प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषया 'राजन् ङस् पुरुष सु' इत्यस्य समुदायस्य प्रत्ययान्ततदादित्वाऽभावादर्थवदधातुरितिपूर्वसूत्रेणैव समासस्य प्रातिपदिकसञ्ज्ञायां सिद्धायां पुनः समासग्रहणं व्यर्थं सत्–'यत्र समुदाये पूर्वो भागः पदं ( यथा 'राजन् ङस् पुरुष सु' इत्यादौ राजन् ङसिति ) तस्य समुदायस्य प्रातिपदिकसञ्ज्ञा चेत्समासस्यैव नान्यस्ये'ति नियमार्थं सम्पद्यते। तेन 'ग्रामभ्याज कृष्णां दण्डेने'त्यादिवाक्यस्य प्रातिपदिकसञ्ज्ञा न भवति। पूर्वो भाग इति चोपलक्षणम्, 'उत्तरस्तु प्रत्ययो ने'त्यस्यापि। तेन जन्मवानित्यत्र पूर्वभागस्य 'जन्मन्' इत्यस्य स्वादिष्वित्यनेन पदत्वेऽपि उत्तरस्य मतुपः प्रत्ययत्वान्नियमाऽप्रवृत्त्या कृत्तद्धितेति प्रातिपदिकसञ्ज्ञा भवत्येव। न च तद्धितग्रहणसामर्थ्यात्तत्र प्रातिपदिकत्वं स्यादेवेति स निवेशो व्यर्थ इति वाच्यं, तद्धितग्रहणस्य'भानोरपत्यं भानवः'इत्यत्र चरितार्थत्वात्। तत्र हि पूर्वभागस्य'भानु'इत्यस्य यचिभमितिभत्वं, न तु पदत्वम्।न चैवम्–'अयमियान्'इति समुदायस्य प्रातिपदिकत्वापत्तिः;पूर्वस्य पदत्वेऽपि उत्तरस्य इयानित्यस्य प्रत्ययत्वान्नियमा-

ऽप्रवृत्तेरिति वाच्यम्, 'यत्र सङ्घाते पूर्वो भागः पदम्, उत्तरस्तु तद्धितः प्रत्ययो न, तस्य चेद्भवति तर्हि समासस्यैवे'ति नियमाकारेण ( इयानित्यस्य च अयमित्यतो विहितत्वाभावेन नियमाक्रान्तत्वेन ) उक्तदोषाऽभावादिति सङ्क्षेपः।

## ङ्याब्ग्रहणं ङ्याबन्ताच्चद्धितोपत्तिर्यथा स्यादिति।

ननु ङ्याप्प्रातिपदिकादित्यत्र ङ्याबित्येव सूत्रमस्तु, 'खट्वा' 'रमा' 'गौरी'त्यादौ स्त्रीप्रत्ययान्ते 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'मिति परिभाषया प्रातिपदिकत्वतद्व्याप्यधर्माणामतिदेशात्प्रातिपदिकादित्यनेनैव सुबुत्पत्तेः सिद्धौ ङ्याब्ग्रहणं व्यर्थमिति चेन्न, ङ्याब्ग्रहणस्य 'ङ्याबन्तादेव तद्धिता उत्पद्यन्ते न ङ्याब्भ्यां प्रा'गित्येवमर्थं सत्त्वात्। अन्यथा स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमश उपस्थित्या आर्यशब्दाल्लिङ्गबोधकप्रत्ययात्पूर्वमत्यन्तस्वार्थिके कप्रत्यये ततष्टापि-'आर्यक आ'इतिस्थिते प्रत्ययस्थादितीत्त्वे, दीर्घे विभक्तिकार्ये च 'आर्यके'त्येकमेव रूपं स्यात्। इष्यते च 'आर्यिका' 'आर्यका'इतिरूपद्वयम्। ङ्याब्ग्रहणे तु आर्यशब्दाट्टापि स्वार्थिके कप्रत्यये ततष्टापि केऽण'इति ह्रस्वत्वे आकारस्थानिकत्वादकारस्य 'उदीचामातः स्थाने'इति वैकल्पिके इत्त्वे आर्यिका आर्यकेति रूपद्वयं सिद्ध्यति। ङ्याब्ग्रहणं च स्त्रीप्रत्ययमात्रोपलक्षणं, तेन ब्रह्मबन्धूतरा युवतितरेत्यत्रापि ऊङाद्यन्तात्तद्धितोत्पत्तिः सिद्ध्यति।

## रुत्वविसर्गौ रामः।

ननु रामशब्दात्सौ ससजुषोरितिरुत्वे तस्य त्रिपादीस्थत्वेन पूर्वत्राऽसिद्धत्वादुपदेशेऽजनुनासिक इत्युकारस्येत्सञ्ज्ञा न स्यात्, किञ्च 'स्थानिवदादेश' इत्यस्यापि त्रिपाद्यामप्रवृत्त्या रामरित्यस्य सुबन्तत्वाऽभावात्पदत्वाऽभावेन खरवसानयोरिति विसर्गो न स्यात्। विसर्गविधानन्तु पुनरित्यादौ चरितार्थमिति चेन्न, 'न मु ने'इति सूत्रे 'ने'ति योगं विभज्य क्वचिदसिद्धत्वं नेत्यर्थकल्पनयाऽत्र रुत्वविसर्गयोः सुलभत्वात्। एतदेव सूचयता मूलकृतोक्तं-'रुत्वविसर्गौ राम'इति। 'रुत्वे एकदेशविकृतन्यायेन सुबन्ततया पदत्वाद्विसर्ग'इतितु भट्टाः।

## सम्बुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यामिति।

ननु 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते' इति न्यायादङ्गं विना सम्बुद्ध्यनुपपत्त्या सम्बुद्ध्याऽऽक्षिप्तस्याऽङ्गस्य सामर्थ्यात्पञ्चम्यन्तस्य 'येन यदा क्षिप्यते तस्य तत्रैवान्वयः'इति न्यायात्सम्बुद्धिविशेषणत्वस्यौचित्येन 'अङ्गात्परा या सम्बुद्धिस्तदवयवो हल्लुप्यते,स च हल् एङ्ह्रस्वाभ्यां परीभूत'इत्यर्थ उचितो ननु मूलोक्त इति चेन्न, 'हे कतरत्' इत्यत्र रेफान्तादङ्गात्परीभूता या 'अ'दिति सम्बुद्धिस्तदवयवस्य हलस्तकारस्य ह्रस्व-

परीभूतस्य लोपापत्तेः। नचैवमपि 'अङ्गात्परा या सम्बुद्धिस्तदवयवो हल्लुप्यते, सा च सम्बुद्धिर्यद्येङ्ह्रस्वाभ्यां परीभूते'त्यर्थेन हे कतरदित्यत्र सम्बुद्धेर्ह्रस्वात्परत्वाऽभावेन दोषाभावादेङ्ह्रस्वयोरनुमिताङ्गविशेषणतया मूलोक्तोऽर्थो नोचित इति वाच्यं, हे कुलेत्यत्र सोरमादेशेऽमिपूर्वत्वे च अङ्गात्परायाः सम्बुद्धेरभावात्, परादिवद्भावे तु सम्बुद्धेर्ह्रस्वात्परत्वाऽभावान्मलोपाऽभावप्रसङ्गात्। तदेवमतिव्याप्त्यव्याप्तिदोषपरिहाराय एङ्ह्रस्वयोरनुमितस्याङ्गस्य विशेषणतया–एङन्ताद्ध्रस्वान्ताच्चाङ्गादित्यर्थो मूलकृताऽऽश्रितः। तस्यचाऽन्येनाक्षिप्तस्याप्यन्यत्राप्यन्वयो भवतीत्याशयः। [अत्रत्यं तत्त्वमन्यत्र स्पष्टम्]।

## एङ्ग्रहणं किं हे हरे हे विष्णो।

नन्वेङ्ह्रस्वादित्यत्रैङ्ग्रहणं व्यर्थं, हेहरे हे विष्णो इत्यादौ परनिमित्तकत्वेन बहिरङ्गाद्गुणात्पूर्वमन्तरङ्गत्वात्सम्बुद्धिलोपप्रवृत्त्या ह्रस्वान्तत्वेनैव निर्वाहादिति चेन्न, परत्वान्नित्यत्वादनवकाशत्वाच्च सम्बुद्धिगुणे कृते ह्रस्वात्परत्वाऽभावेन हे हरे इत्यादेरसिद्ध्यापत्त्या तत्र लोपार्थमेङ्ग्रहणस्यावश्यकत्वात्। इत्यजन्ताः पुंलिङ्गाः।

## रमाः।

रमाशब्दाच्छसि पूर्वसवर्णदीर्घे सस्य सत्वे विसर्गे च रमा इति सिद्धं। नन्वत्र तस्माच्छसो नः पुंसीति नत्वेन भाव्यमित्याशङ्क्याह–**स्त्रीत्वान्नत्वाभाव इति**। न च नत्वस्य प्रयोजकीभूतं यथा पुंस्त्वं तथा नत्वाऽभावस्य प्रयोजकीभूतः पुंस्त्वाभावस्तर्हि स्त्रीत्वस्य हेतुत्वमसङ्गतमिति वाच्यम्। स्त्रीत्वस्य पुंस्त्वाभावस्वरूपत्वेन पुंस्त्वाभावान्नत्वाभाव इत्यस्य फलितत्वात्। लाघवाच्च। किं तल्लाघवमिति चेदुत्तरत्र मतीरित्यत्राऽपि स्त्रीत्वान्नत्वाऽभावः। मत्येत्यत्र च नात्वं न, कथं, स्त्रीत्वादिति सम्बध्यते इति प्रक्रियासूचनम्।

## रमायै।

रमाशब्दान्ङेविभक्तौ 'याडाप' इति याटि वृद्धिरेचीति वृद्धौ रमायै इति रूपं भवति। न चात्र आटश्चेति वृद्ध्या भाव्यमिति वाच्यम्। 'आट' इत्यत्र टित्त्ववान् आकारो गृह्यते, 'याट' इत्यत्र च टित्त्वविशिष्टो'या'शब्दो न त्वाकार इति आटश्चेत्यस्याऽप्रवर्त्तनात्।

## णत्वं द्वित्वं चतुर्णाम्।

ननु चतुःशब्दादामि षट्चतुर्भ्यश्चेति नुटि चतुर् नामित्यत्र रषाभ्यां नो ण इतिणत्वं प्राप्नोति, तथा अचो रहाभ्यां द्वे इति द्वित्वं च प्राप्नोति। यद्यपि परविप्रतिषेधेन द्वित्वेन भाव्यं तथाऽपि णत्वशास्त्रस्य पूर्वत्रिपादीस्थत्वेन पूर्वत्रासिद्धमिति शास्त्रबलेन णत्वं प्रति

द्वित्वस्याऽसिद्धत्वेन पूर्वं णत्वे पश्चाद्द्वित्वे चतुर्ण्णामिति सिध्यति। अत्राशङ्क्यते—ननु 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषया द्वित्वविधौ पूर्वत्रासिद्धमित्यस्याऽप्रवृत्त्या परत्वाद्द्वित्वे सत्येव णत्वं भविष्यति। एवं च 'द्वित्वं णत्वं छ्त्व'मिति प्रक्रिया ननु 'णत्वं द्वित्व'मिति चेन्न। वर्णद्वित्वेऽस्याः परिभाषाया अप्रवृत्तेः। प्रमाणं चात्र 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्य'मितिवार्तिकमेव। तथा हि सम्-यन्तेति स्थिते 'मोऽनुस्वार' इत्यनुस्वारे सति अनचिचेति द्वित्वमपि प्राप्नोति, वा पदान्तस्येति परसवर्णत्वमपि च प्राप्नोति। अत्रापि यद्यपि परत्वात्परसवर्णं एवोचितस्तथाऽपि द्वित्वस्य पूर्वत्रिपादीस्थत्वेन द्वित्वमेव प्राप्नोति। तन्निवारणाय 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्य'मिति वार्तिकमुक्तं वार्तिककृता। यदि वर्णद्वित्वे सा परिभाषा प्रवर्तेत तर्हि इहापि परत्वात्परसवर्णे ततो द्वित्वे लक्ष्यसिद्धिः स्यादेव, पुनः द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यमिति वार्तिकं किमर्थमिति?। अतो ज्ञायते—वर्णद्वित्वे सा परिभाषा न प्रवर्तत इति। नन्वेवमपि वाक्क्वाग्ग् इति भाष्यप्रयोगौ न सिद्ध्येताम्। अत्र हि वावसाने इति चर्त्वं प्राप्नोति, अनचि चेति द्वित्वञ्च। तत्र पूर्वं द्वित्वे पश्चाच्चर्त्वे वाग्क् इत्यनिष्टरूपापत्तिरिति चेन्न। 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यस्य 'द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धं स्यात्। द्वित्वे पूर्वत्र कर्तव्ये तु सिद्धमेव स्या'दित्यर्थे वाक्क् इत्यत्र द्वित्वे पूर्वत्र कर्तव्ये परस्य सिद्धत्वेन दोषात्। चतुर्ण्णामित्यत्र तु द्वित्वभिन्ने णत्वे पूर्वत्र कर्तव्ये परस्य द्वित्वस्याऽसिद्धत्वेन पूर्वं णत्वे पश्चाद्द्वित्वे सति णत्वं द्वित्वमिति ग्रन्थकृत्प्रक्रियैव युक्तेति संक्षेपः॥

## अमुमुयङिति।

अमुमञ्चतीति विग्रहे अदस् अञ्च् इतिस्थिते, 'विश्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये'
इति सूत्रेण असित्यस्याऽद्र्यादेशे 'अदद्रि-अञ्च्'इति जाते, यणि ततः 'अदसोऽसेर्दादुदो
म'इति शास्त्रेण द्विर्मत्वे उत्वे च कृते स्वादिकार्ये अमुमुयङिति सिद्धम्। 'अन्त्यबाधे
(अन्त्यस्य कार्याप्राप्तौ) अन्त्यसदेशस्य कार्य'मित्यर्थिकया परिभाषया द्वितीयदकारस्यैव
मुत्वं, रेफस्योत्वम्। एव च अदमुयङिति केचित्। अः सेः सकारस्य स्थाने यस्य सोऽसि-
स्तस्य असेरिति व्याख्यानात्त्यदाद्यत्त्वविषये एव मुत्वप्रवृत्तिर्नान्यत्रेति पक्षेतुअदद्र्यङिति।
एवंच त्रीणि रूपाणि भवन्ति। तथाहिः **अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छ-
न्तिलत्ववत्। केचिदन्त्यसदेशस्य, नेत्येकेऽसेर्हि दृश्यते॥** इति।

## पूर्वस्य किम्-परस्य मा भूत् कटुका।

प्रत्ययस्थादिति सूत्रे पूर्वस्यग्रहणाऽभावे कटुकशब्दाट्टापि सवर्णदीर्घे कृते ककारा-

व्यवहितोत्तरस्याऽकारस्याऽसम्भवात् तस्मादित्युत्तरस्येति परिभाषया उत्तरांशो नोपतिष्ठते, किन्त्वव्यवहितांशषष्ठ्यंशावेवोपतिष्ठेते । दिग्योगलक्षणायाः पञ्चम्या उपपत्तयेच पूर्वस्येत्यध्याहारे प्रत्ययस्थककाराव्यवहितपूर्वस्याऽकारस्येत्वं स्यादित्यर्थे कटुकेत्यादौ नेत्वप्रसक्तिरिति **प्रष्टुराशयः** । पूर्वग्रहणाऽभावे तस्मादित्युत्तरस्येत्यनेन अव्यवहितांशोत्तरांशषष्ठ्यंशानामुपस्थित्या प्रत्ययस्थककाराव्यवहितोत्तरत्वविशिष्टस्याऽकारस्येत्त्वं स्यादित्यर्थेन कटुकेत्यत्र कटुकशब्दाट्टापि कटुक-आ इति स्थिते, इत्वसवर्णदीर्घयोः प्राप्तौ 'वार्णादाङ्गं बलीय'इतिपरिभाषया अपवादत्वाच्च दीर्घं बाधित्वा इत्त्वं स्यात्, कृते तु पूर्वग्रहणे तत्सामर्थ्यादुत्तरांशस्यानुपस्थित्या न दोष इति **समाधातुराशयः** ।

ननु सर्विकेत्यत्रैव सर्वक-आ इति दशायां दोषसत्त्वेन तदेव प्रत्युदाहरणं वक्तुं युक्तमिति कटुकेत्येतत्पर्यन्तं किमर्थं ग्रन्थकृताऽनुधावनं कृतमिति चेन्न, मनोरमायां सर्विकेत्यस्योपलक्षणत्वेन व्याख्याततत्वात् । वस्तुतस्तु मुखनासिकावचनइतिनिर्देशाद्यत्र लक्ष्ये प्रत्ययघटककाकारात् पूर्वत्र परत्र चाऽकारः सम्भवति तत्र पूर्वस्यैवाऽकारस्येत्वं भवतीति कल्पनेन सर्विकेत्यादौ दोषाऽभावात्कटुकेत्येव प्रत्युदाहरणं वक्तुं युक्तम् । किञ्च प्रत्ययस्थादितिसूत्रे तस्मादित्युत्तरस्येति परिभाषाप्रवृत्तिस्वीकारे 'सूतका पुत्रका वृन्दारका' इत्यत्र कादुत्तरत्र अकारस्यैव सत्त्वेन तस्यविकल्पेनेत्वविधाने रूपद्वयसिद्धौ सूतकापुत्रकेतिवार्तिकेऽकारप्रश्लेषस्य वैयर्थ्यादुक्तसूत्रे तस्मादित्युत्तरस्येतिप्रवृत्त्यभावः । कादित्यत्र दिग्योगलक्षणाया पञ्चम्या उपपत्तये पूर्वस्येतिपदाध्याहारः स्यादुत परस्येति विशेषविचारे परस्येतिपदाध्याहारे सवर्णदीर्घबाधकल्पनं भवति, पूर्वस्याक्षेपे तु न, अतः अकः सवर्णेइतिसूत्रबाधाऽभावरूपलाघवार्थं पूर्वपदाध्याहारेण न दोषः । सूतकावृन्दारकेत्यत्र कात्पूर्वस्याकारस्येत्त्वविधानेन रूपद्वयसिद्धावपि पुत्रिका इत्यत्र कात्पूर्वत्रैकारस्यैव सत्त्वेन पुत्रका-पुत्रिकेति रूपद्वयं न सिद्ध्यतीति तदुपपत्तयेऽकारप्रश्लेषोऽपि सार्थकः । यत्र लक्ष्ये पूर्वत्राकारो न सम्भवति तत्राऽगत्या परपदाध्याहारेण कटुकेत्यत्रेत्वापत्तिर्भवतीति पूर्वस्येति ग्रहणं कार्यमेव । केचित्तु-यथोक्तसूत्रे पूर्वस्य ग्रहणाऽभावे कादिति दिग्योगलक्षणपञ्चमीश्रुत्या तस्मादिति परिभाषोपस्थित्या—कात्परस्याकारस्येत्वमापि परे इत्यर्थे स्वीक्रियमाणे अकारान्तादेव टाप्प्रत्ययविधानात्कादुत्तरत्र सर्वत्राकारस्यैव सत्त्वेन पूर्वसूत्रेऽद्ग्रहणस्य वैयर्थ्यापत्त्या पूर्वोक्तपरिभाषा न प्रवर्तते । पञ्चम्या उपपत्तये तु पूर्वस्येति परस्येति वा पदमध्याहियते, यत्र लक्ष्ये ककारात्पूर्वत्रोत्तरत्रच अकारः सम्भवति तत्र नित्यंक्रीडाजीविकयोरिति निर्देशात् कात्पूर्वस्यैवाऽकारस्येत्वमिति कल्पनेन न दोषः । किन्तु कटुकेत्यादौ

कात्पूर्वस्याऽकारस्याऽसम्भवात् परस्याकारस्येत्वं स्यादिति तन्निवारणाय सूत्रे पूर्वस्य ग्रहणं कृतमित्याहुः। तन्नोचितं, 'भवतु' इति तिङन्तादव्ययसर्वनाम्नामितिसूत्रे मण्डूकप्लुत्याऽनुवृत्तेन तिङश्चेति सूत्रेणाऽकचि 'भवतकु'इति रूपम्। अशब्दादाचारक्विन्ता-ल्लोटि सिपि, हौ, हेश्च लुकि, 'अ इति च रूपम्। उभयोः भवतकु अ इत्येवं सततं तत्राभि-धीयते सा इति विग्रहे 'आख्यातमाख्यातेन क्रियासातत्ये'इति समासे क्रियारूपस्यान्य-पदार्थस्य प्राधान्येन स्त्रीत्वाट्टापि भवतकेति लक्ष्ये कात्परस्याऽऽकारस्य इत्वनिवारणाय अद्ग्रहणस्याऽवश्यकत्वात् ॥

ननु प्रत्ययस्थादिति सूत्रे पूर्वग्रहणाभावे 'सुवन्ततदाद्यव्यवहितपरो य आप्प्रत्यय-स्तदव्यवहितपूर्वत्वविशिष्टो यः प्रत्ययघटकककारस्तदवधिको य अकारस्तस्येत्वं स्यादि-त्यर्थेन व्यवहिताव्यवहितपूर्वपरेत्यादीनामनियमेन प्राप्तौ, तन्निवारणार्थं दिग्योगलक्षणायाः पञ्चम्या उपपत्त्यर्थञ्च तस्मादित्युत्तरस्येति परिभाषया अव्यवहितांशोत्तरांशोपस्थित्या-रङ्गत्वाद्दीर्घे सति परत्राऽकारासम्भवात् पूर्वस्यैवाध्याहारे सर्वत्राऽदोषात्पूर्वस्यग्रहणं व्यर्थ-मितिचेन्न, 'वर्णादाङ्गं बलीय' इति 'अभ्यासस्याऽसवर्णे' इत्यत्रासवर्णग्रहणेन ज्ञापितया परिभाषया पूर्वमित्वस्यैव प्राप्त्या सर्विक्येत्यनिष्टप्रसङ्गात्। न च पराकारस्येकारविधाने सति अत इत्यस्य व्यर्थतया पूर्वस्येत्यध्याहारेण पूर्वग्रहणं निष्फलमेवेति वाच्यं, भवतकु अ यस्यां क्रियायां सततमभिधीयते सा भवतका क्रियेत्यत्र वस्य इत्ववारणार्थं तत्साफल्यात्। न च तपरकरणसामर्थ्यादेव यथोक्तकल्पनं स्यादिति वाच्यम्, भवितका अ यस्यां क्रियायामिति विग्रहे 'भवितका अ आ, इतिस्थितेऽनन्त्यस्यापि प्रश्नाख्यानयो-रिति आकारस्य प्लुते सति अ आ इत्यनयो दीर्घे पुनर्दीर्घे सति भवितकेत्यत्रेत्ववारणार्थं तत्सार्थक्यात्। अचः परस्मिन्निति स्थानिवत्त्वेन वर्णद्वयव्यवधानं तु न शङ्क्यं, न पदा-न्तेति निषेधात्।

एवञ्च परपदाध्याहारेणोत्तरसूत्रे 'उदीचामातः'इत्यत्र परस्यातःस्थानिकाकारस्या-सम्भवात्तत्सामर्थ्यात्पूर्वसूत्रे पञ्चम्युपपत्तये आरात्पदमध्याह्रियते, यत्र पूर्वत्र परत्र प्राप्ति-स्तत्र नित्यं क्रीडाजीविकयोरिति निर्देशात्पूर्वस्यैवेति नियमेन सर्विकेत्यादावदोषात्कटुके-त्येव दोषदानमुचितम्। अत्र पूर्वत्राकारो न सम्भवति, एवं च पूर्वस्येतिकर्त्तव्यमेव। वस्तुतस्तु 'प्रत्ययस्थे कि' इति न्यासैनैव सकलेष्टसिद्धौ पूर्वग्रहणं व्यर्थमेवेत्याहुः।

## वक्ष्यमाणा।

वच्धातोर्लृटि तस्य शानजादेशे स्यतासी इति स्यप्रत्यये कुत्वषत्वयोष्टापि वक्ष्यमाणेति

भवति। नन्वत्र स्थानिवद्भावेन लङ्कृत्तिटित्त्वमुगित्त्वं वादाय वक्ष्यमाणेत्यत्र वक्ष्यमाणेन उगितश्चेति अनुपसर्जने च टिड्ढेतिशास्त्रेण ङीप् स्यादिति वाच्यम्। अनुबन्धवृत्तिधर्मघटितधर्मानयने अनल्विधाविति निषेधेन टित्त्वोगित्त्वयोरभावात्। न च न ल्यपीतिशास्त्रप्रामाण्यात् पूर्वोक्तधर्मानयनेऽनल्विधाविति न प्रवर्त्तत इति वाच्यम्, यासुट्परस्मैपदेषूदात्तोङिच्चेत्यत्र लिङ्वृत्तिङित्त्वेनैव सिद्धे पुनर्ङित्त्वोक्तेः क्वचिदनुबन्धकार्येऽपि अनल्विधाविति प्रतिषेध इतिकल्पनात्। ननु पिच्च ङिन्न, ङिच्च पिन्नेति भाष्योक्तेस्तस्य ङित्वस्य चारितार्थ्यात्कथं ज्ञापयितुं शक्यते इति चेत्तर्हि श्नादेशस्य शानचः शित्करणं लिङ्गमिति गृहाण। न च शित्करणमपि आकरे प्रत्याख्यातम्। एवं च टित्वोगित्त्वलक्षणङीपःप्रसक्तिर्दुर्वारैवेतिवाच्यम्। अजादिगणे पाठकल्पनाद्वाविति दोषाऽभावात्।

## उतः किम् शुचिः।

ननु वोतो गुणवचनादिति सूत्रे'उत'इत्यस्याऽभावे गुणवाचकान्ङीषित्यर्थे मृद्वीत्यादीनां सिद्धिः स्यादेव पुनस्तद्ग्रहणं व्यर्थमितिचेन्न, उकारग्रहणाऽभावे शुचिरित्यत्राऽपि ङीषापत्तेः। ननु तद्ग्रहणेऽपि अजाद्यतष्टाविति सूत्रादकारानुवृत्तौ मृद्वीत्यत्रैवाव्याप्तिरिति चेन्न, खरुसंयोगोपधादिति वार्तिकेनैव तदननुवृत्तिज्ञापनात्। नन्वत्र अकारोऽनुवर्तते चेत्तर्हि शोणात्प्राचामित्यस्यैव वैयर्थ्येन तदननुवृत्तिर्ज्ञापनीयेति चेच्छृणु—प्राचाम्मते भवति उदीचां मते न भवतीति विचित्रविकल्पार्थं तस्य साफल्यात्। अतः खरुसंयोगोपधादित्यत्र व्युत्पन्ने—अव्युत्पन्ने वा पक्षे 'कृदिकारादक्तिनः,' 'सर्वतोऽक्तिन्नर्थादित्येके'इति वार्तिकद्वयेन क्रमेण ङीप् भवत्येवेति को दोष इति चेत्, शुक्ला श्यामेत्यादौ ङीषापत्तिरितिगृहाण। नन्वत्रापि शुक्लेतिलक्ष्ये नास्ति दूषणं, संयोगोपधादिति निषेधात्। श्यामेत्यत्र श्वेतेत्यादावपि च दोषाऽभाव एव, गुणवाचकाददन्तात्प्रातिपदिकान्ङीष् चेत्तर्हि कल्याणशब्दादेवेति बह्वादिगणे कल्याणशब्दपाठसामर्थ्येन ज्ञापनात्। एवं तर्हि किमुत इति पदस्य फलमिति चेत्, हरिच्छब्दान्ङीष् माभूदित्यर्थं तत्साफल्यादित्यलम्।

## उपसर्जनात्किम् शिखा।

ननु स्वाङ्गाच्चोपसर्जनादसंयोगोपधादित्यस्मिन् सूत्रे उपसर्जनग्रहणे अतिकेशीत्यादिसिद्धौ तत्पदं निष्फलमेवेति चेन्न, तदभावे अनुपसर्जनादित्यधिकाराल्लक्ष्ये एवाव्याप्तिरूपदोषापत्तेः। न च सूत्रारम्भसामर्थ्यान्न तदधिकार इति कल्प्यते इति वाच्यम्, शिखेत्यत्र तत्सूत्रसाफल्यात्। न चैवं तर्हि बहुव्रीहेश्चान्तोदात्तादिति बहुव्रीहिपदमनुवर्त्य अनुपसर्जनाधिकाराऽभाव इति वाच्यम्, पुनरपि अतिकेशीति तत्पुरुषे दोषस्य तादवस्थ्यात्। अतोऽ

धिकारानुवृत्ती न कर्तव्ये। 'कल्याणपाणिपादा'इत्येतदर्थमस्वाङ्गपूर्वपदाद्वेत्यनुवर्त्य परिहृतं दूषणं भाष्यकृद्भिः। ततश्चात्रोपसर्जनादिति व्यर्थमेवेति चेन्न, सुशिखा, अशिखेत्याद्यर्थं तत्साफल्यात्॥ **इति स्त्रीप्रत्ययाः।**

## लिङ्गमात्रे प्रथमा।

अस्य कोऽर्थः, लिङ्गेतरार्थानुपस्थापकत्वे सति लिङ्गार्थोपस्थितिजनकत्वं यस्य ततः प्रथमा। ननु एतादृशः शब्दो नास्ति येन केवलं लिङ्गमेवोपस्थाप्यते, सर्वत्रैव प्रथमं प्रातिपदिकार्थस्यैवोपस्थितेः। न च पुमान् स्त्री नपुंसकमिति शब्दा लिङ्गमात्रोपस्थापकः, तत्रापि पूर्वं प्रतिपादिकार्थस्यैवोपस्थितत्वात्। न च तटः तटी तटमिति तथेति वाच्यं, तत्रापि तटत्व-तटेत्याकारकप्रातिपादिकार्थस्यैव प्रागुपस्थितेः। नापि लिङ्गशब्देऽप्येतादृशी शक्तिर्यया लिङ्गमात्रमेवोपस्थापयितुं शक्यम्। अतो लिङ्गग्रहणं व्यर्थमिति चेन्न, प्रातिपदिकार्थापेक्षया यत्र लिङ्गमात्रमधिकं भासते ततः प्रथमेतिकल्पनेन तत्साफल्यात्। एवं च तटः तटी—तटमिति तदुदाहरणम्। न चात्रापि प्रातिपादिकार्थापेक्षया पुंस्त्वत्वमिति पुंस्त्वापेक्षया—अधिकं प्रतिभासते इति कथं साफल्यमिति वाच्यम्। पुनरपि तेन व्यर्थेन सता 'यत्र लिङ्गादिमात्रमधिकं भासते' इति कल्पनेन आदिपदेन तद्धर्मस्य पुंस्त्वत्वस्यापि ग्रहणेन चरितार्थ्यादत आह मूले 'अनियतलिङ्गास्तु लिङ्गमात्राद्याधिक्यस्ये'ति। नन्वत्र कृष्णः, श्रीः, ज्ञानमितिवत्तटः तटी तटमित्यादिष्वपि प्रातिपदिकार्थमात्रे एव प्रथमा कुतो नेति तु न शङ्क्यम्। तटादिगतलिङ्गस्य अनियतत्वात्।

## द्रोणो व्रीहिः।

परिमाणग्रहणात्परिमाणमात्रे (द्रोणो व्रीहिरित्यत्र) प्रथमाविभक्तौ द्रोणो व्रीहिरित्यत्र प्रथमाप्रत्ययार्थे 'सामान्यपरिमाणे प्रकृतिभूतद्रोणपदार्थस्य विशेषपरिमाणस्याऽभेदेनसम्बन्धेनान्वयः। सामान्यविशेषयोरभेदान्व'इति व्युत्पत्तेः। प्रत्ययार्थश्च व्रीहौ परिच्छेद्यपरिच्छेदकसम्बन्धेनान्वेति। एवञ्च द्रोणाऽभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति शब्दबोधस्तत्र भवति। परिमाणग्रहणाऽभावे द्रोणपदात् प्रातिपदिकार्थमात्रे एव प्रथमाविभक्तौ सत्यां द्रोणपदाद्व्रीहिपदाच्च प्रातिपदिकार्थएव प्रथमासत्त्वान्नागार्थयोरभेदाऽन्वय इति व्युत्पत्त्या द्रोणाऽभिन्नो व्रीहिरित्येव शाब्दबोधः स्यात्। सचाऽनिष्टः। एवञ्च परिमाणग्रहणं सूत्रे करणीयमेवेति तत्त्वम्।

## सर्पिषोऽपि स्यात्।

स्यादिति सम्भावनायामुपसंवादाशङ्कयोर्लिङितिवार्त्तिकेन लिङ्। उत्कटकोटिकाया

आशङ्काया एव सम्भावनात्वादेतद्वार्त्तिकविषयता स्पष्टा। अपिः पदार्थेतिसूत्रेणापेः पदार्थद्योतकतया कर्मप्रवचनीयसंज्ञा। विन्दुद्योतकोऽयमपिः, कर्मप्रवचनीयानां च सम्वन्धद्योतकत्वादपेः कर्तृभूतविन्दुदौर्लभ्यप्रयुक्तभवनादिक्रियाद्योतकताऽपीत्युभयद्योतकोऽयमपिः। एवञ्च–संभावनाविषयीभूतायां स्यात्पदवाच्यभवनक्रियायामपिद्योत्यस्य विन्दोः स्वद्योत्येन स्वदौर्लभ्यप्रयोज्यदौर्लभ्यसम्वन्धेनान्वयः। तदुक्तं मूले–'सम्भावनाया एव विषयीभूते भवने कर्तृविन्दुदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशव्दो भवनक्रियावाचिना स्यादित्यनेन सम्वध्यत'इति। सर्पिष इति षष्ठी त्वपिशव्दवलेन गम्यमानस्य विन्दोरवयवावयविभावसम्वन्धे एव। सर्पिषो विन्दुरपि स्यादित्यर्थात्। एवञ्च–सर्पिरवयवविन्दुदौर्लभ्यप्रयोज्यदौर्लभ्यवती विन्दुकर्तृका उत्कटकोटिकाऽऽशङ्का( सम्भावना )-विषयीभूता सत्तेति शाव्दवोधः। नन्वेवं कर्मप्रवचनीयद्योत्येऽर्थे विन्दौ सर्पिषोऽन्वयेन सर्पिषः कर्मप्रवचनीयत्वाद्द्वितीया स्यादिति चेन्न, सर्पिषोऽपिद्योत्यविन्दुना योगेऽपि अपिना सम्वन्धाऽभावात्। न च विन्दुना योगे तद्द्योतकाऽपिनाऽपि योगो जात एवेति वाच्यं, विन्दुना योगेऽपि अपिद्योत्यस्वदौर्लभ्यप्रयुक्तदौर्लभ्यसम्वन्धेन सर्पिषोऽन्वयाऽभावात्। न च विन्दौ सर्पिषोऽन्वयात्तद्द्वारोक्तसम्वन्धेनाऽप्यन्वयोऽस्त्येवेति वाच्यं, कर्मप्रवचनीयद्योत्यसम्वन्धप्रतियोगित्वस्यैव तद्युक्तत्वात्। प्रकृते च अपिद्योत्यस्वदौर्लभ्यप्रयुक्तदुर्लभत्वसम्वन्धस्य विन्दुरेव प्रतियोगी न सर्पिरितिदोषाऽभावादिति सारम्।

## कर्त्तुः किं माषेष्वश्वं वध्नाति।

ननु कर्त्तुरीप्सिततममिति सूत्रे कर्त्तुरित्यस्याऽभावेऽपि ईप्सिततममित्यस्य आप्तुं सम्वन्धुमिष्यमाणमित्यर्थात् केनाप्तुमिष्यमाणमित्याकाङ्क्षायां 'कारके' इत्यधिकारात्क्रियाजनकत्वस्यैव च कारकपदार्थत्वात्तद्विशेषणीभूतव्यापारलाभात् कारकवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यताश्रयः कर्मेति सूत्रार्थलाभाद्धरिं भजतीत्यादौ देवदत्ताऽभिन्नकर्त्तृकारकनिष्ठव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छीयोद्देश्यताश्रयत्वाद्धरेः कर्मत्वं सूपपन्नमिति कर्त्तुरिति किमर्थमिति चेन्न। माषेष्वश्वं वध्नातीत्यत्र ( माषेषु प्रविष्टमश्वं माषनाशो माभूदितीच्छया देवदत्तोऽन्यत्र वध्नातीत्यर्थके ) कर्मकारकाश्वनिष्ठगलविलाऽधःसंयोगानुकूलव्यापारप्रयोज्यतादृशगलविलासंयोगरूपफलाश्रयत्वेनेच्छोद्देश्यताश्रयत्वान्माषाणां कर्मत्वापत्तेः। कर्त्तुरिति पदोपादाने तु कर्त्तुर्देवदत्तस्य माषभक्षणं नेष्टं किन्तु कर्मणोऽश्वस्य तदिष्टमिति न माषाणां कर्मत्वमिति सङ्क्षेपः।

## तमब्ग्रहणं किं पयसा ओदनं भुङ्क्ते ।

ननु तमब्घटितं सूत्रं किमर्थं, 'कर्त्तुरुद्देश्यं कर्मे'त्येव सूत्र्यतामिति चेन्न, यदा कृतभोजनोऽपि पयोलोभेनौदनभोजने प्रवर्त्तते तत्र पयसा ओदनं भुङ्क्ते इत्यत्र पयसः कर्मत्वापत्तेः । तत्क्रियायाः पयउद्देश्यकत्वात् । तमब्ग्रहणे तु ईप्सिततमशब्दस्य क्रियाशब्दत्वात्कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वेनेच्छोद्देश्यस्यैव कर्मसञ्ज्ञाविधानात्पयसश्च तदा फलाश्रयत्वेन विवक्षाया अभावात्पयसः कर्मसञ्ज्ञा न भवति । कर्तुरुद्देश्यमिति सूत्रिते तु पयस उद्देश्यतायाः सत्त्वात्कर्मत्वापत्तिरिति तत्त्वम् ।

## तमब्ग्रहणं किं गङ्गायां घोषः ।

ननु कारकाऽधिकारात् क्रियतेऽनेनेति करणमित्यन्वर्थल्युडन्तमहासञ्ज्ञयैव साधकरूपार्थे लब्धे पुनः सूत्रे साधकपदं क्रियमाणं साधकतमार्थं भविष्यतीति पुनस्तमब्ग्रहणं व्यर्थमितिचेन्न, तमब्ग्रहणमेवं सति व्यर्थं सत् 'अस्मिन्कारकप्रकरणे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते'इतिज्ञापनार्थमित्यदोषात् । ज्ञापनफलञ्च गङ्गायां घोष इत्यत्राधिकरणसञ्ज्ञासिद्धिः । अन्यथा आधारोऽधिकरणमित्यत्राऽधिकरणल्युडन्तमहासंज्ञयैव अधिक्रियतेऽस्मिन्निति व्युत्पत्त्या आधारपदार्थे लब्धे पुनराधारपदोपादानं प्रकृष्टाधारलाभार्थं भविष्यतीति सर्वावयवव्याप्त्या य आधारस्तत्रैव अधिकरणसंज्ञा स्यात्, यथा तिलेषुतैलं, दधनि सर्पिरिति, गङ्गायां घोष इत्यादौ च न स्यादिति सङ्क्षेपः ।

## कृतपूर्वी कटम् ।

ननु—क्रियाजनकत्वं हि कारकत्वमिति सिद्धान्तेन कर्तृकर्मणोः कृतीति सूत्रे कर्तृकर्मभ्यां कारकाभ्यां क्रियाया आक्षेपो भविष्यति । क्रिया च धातुवाच्या । धातोश्च द्वये प्रत्ययाः, तिङः कृतश्चेति । तत्र तिङ्योगे 'न लोके'ति कर्मणि षष्ठ्या निषेधेन कृद्योगे एव कर्मणि षष्ठी भविष्यतीति कृतिग्रहणं व्यर्थमिति शङ्का । तदेव व्यर्थं सत् यत्र कृदन्तमात्रशक्तिग्रहप्रयोज्यक्रियानिरूपितं कर्मत्वं तत्रैव कर्मणि षष्ठी स्यात् । यत्र तु तद्धितान्तप्रयोज्यक्रियानिरूपितं कर्मत्वं स्यात्तत्र माभूदिति ज्ञापयति । एवञ्च 'ओदनस्य पाचक' इत्यादौ कृदन्तमात्रप्रयोज्यपाकक्रियानिरूपितं कर्मत्वमिति तत्र षष्ठी भवति । कृतपूर्वीकटमित्यत्र तु तद्धितान्तप्रयोज्यक्रियानिरूपितं कर्मत्वमिति षष्ठी न भवति । केवलस्य कृतेति पदस्य योगे कर्मण उक्तत्वेन कृदन्तमात्रप्रयोज्यक्रियानिरूपितं कर्मत्वञ्चास्तीत्युत्तराशयः । **इति कारकप्रकरणम् ।**

इति परीक्षालेखनप्रणाली । विस्तरस्तु बृहत्फक्किकाकौमुद्यां तज्जिज्ञासुभिर्द्रष्टव्यः ।

---

